'न देहाय न तन्मानपराय च कथञ्चन ।
सदेहमानिहरये प्रणमेत्केवलाय वा ।।'

**इत्यादिना कर्मनिर्णयोक्तो ध्येयः । आदिपदेन सङ्कल्पादिः । अग्नीषोमीयेति । सर्वयागानां विष्णुदेवताकत्वेऽपीत्यनुकर्षः ।**

ಯಜ್ಞದಲ್ಲಿ ಕೇವಲ ವಿಷ್ಣುವನ್ನು ಉದ್ದೇಶಿಸಿ ಹವಿಸ್ಸನ್ನು ಪ್ರಧಾನ ಮಾಡಲು ಸಾಧ್ಯವಿಲ್ಲ. ಅಗ್ನಿಯ ಉದ್ದೇಶವೂ ಸಹ ಇರುತ್ತದಲ್ಲವೇ? ಎಂಬ ಆಕಾಂಕ್ಷೆಗೆ ಹೀಗೆ ಉತ್ತರಿಸಬೇಕು. ಉತ್ತಮಾಧಿಕಾರಿಗಳು ಮಾಡುವ ಅನುಸಂಧಾನವೇ ಬೇರೆ ರೀತಿಯಲ್ಲಿರುತ್ತವೆ. ಅಧಮಾಧಿಕಾರಿಗಳ ಅನುಸಂಧಾನವೇ ಬೇರೆ ಕ್ರಮದಲ್ಲಿರುತ್ತವೆ. ಉತ್ತಮಾಧಿಕಾರಿಗಳಿಗೆ 'ಅಗ್ನಯೇ ಸ್ವಾಹಾ, ಇಂದ್ರಾಯ ಸ್ವಾಹಾ' ಇತ್ಯಾದಿಯಾಗಿ ಹವಿಸ್ಸನ್ನು ಪ್ರಧಾನ ಮಾಡುವ ಸಂದರ್ಭದಲ್ಲಿ "ಗುಹಾಶಯಾಯೈವ ನ ದೇಹಮಾನಿನೇ" 'ನ ದೇಹಾಯ ನ ತನ್ಮಾನಪರಾಯ ಚ' ಎಂಬ ಅನುಸಂಧಾನವಿರುತ್ತದೆ. ಅಂದರೆ ವಿಷ್ಣುವಿಗೆ ಮಾತ್ರ ಈ ಹವಿಸ್ಸು, ದೇಹಕ್ಕಾಗಲೀ ಅಥವಾ ಅಭಿಮಾನಿದೇವತೆಗಾಗಲೀ ಹವಿಸ್ಸನ್ನು ನೀಡುತ್ತಿದ್ದೇವೆಂಬ ಅನುಸಂಧಾನ ಅವರಿಗಿರುವುದಿಲ್ಲ. ಇನ್ನು ಅಧಮಾಧಿಕಾರಿಗಳಿಗೆ 'ಸದೇಹಮಾನಿಹರಯೇ ಪ್ರಣಮೇತ್ಕೇವಲಾಯ ವಾ' ಎಂಬಂತೆ ಅಗ್ನಿದೇವತೆಯಲ್ಲಿ ಅಂತರ್ಗತನಾದ ಪರಮಾತ್ಮನಿಗೆ ಎಂಬ ಅನುಸಂಧಾನದಿಂದ ಮುಖ್ಯವಾಗಿ ಪರಮಾತ್ಮನಿಗೆ; ಅಮುಖ್ಯವಾಗಿ ಅಗ್ನಿಗೆ ಇದು ಆಹುತಿಯಾಗುತ್ತದೆಂಬ ಅನುಸಂಧಾನವಿರುತ್ತದೆ. ಇತ್ಯಾದಿ ಪ್ರಮೇಯ ವಿಚಾರಗಳನ್ನು ಕರ್ಮನಿರ್ಣಯದಲ್ಲಿ ಹೇಳಿದ್ದಾರೆ. ಅದನ್ನು ಇಲ್ಲಿ ಸ್ಮರಿಸಿಕೊಳ್ಳಬೇಕು.

ಆದಿಪದದಿಂದ ಸಂಕಲ್ಪಾದಿಗಳನ್ನು ಹೀಗೆಯೇ ವಿವಕ್ಷಿಸಬೇಕು. ಅಂದರೆ ಅಧಮಾಧಿಕಾರಿಗಳು ಅಗ್ನ್ಯಂತರ್ಗತನಾದ ಪರಶುರಾಮನ ಪ್ರೀತಿಗೋಸ್ಕರ ಎಂದು ಸಂಕಲ್ಪ ಮಾಡುತ್ತಾರೆ. ಉತ್ತಮಾಧಿಕಾರಿಗಳು ಕೇವಲ ಪರಶುರಾಮನ ಪ್ರೀತಿಗೋಸ್ಕರ ಸಂಕಲ್ಪ ಮಾಡುತ್ತಾರೆ ಎಂದರ್ಥ.

ಅಗ್ನಿಷೋಮೀಯ ಎಂದು ಮೂಲದಲ್ಲಿದೆ. ಇಲ್ಲಿಯೂ ಸಕಲ ಯಾಗಗಳು ವಿಷ್ಣುದೇವತಾಕವಾಗಿದ್ದರೂ ಸಹ ಎಂಬುದನ್ನು ಅನುಕರ್ಷ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಅಂದರೆ ಎಲ್ಲಾ ಯಾಗಗಳಿಗೂ ವಿಷ್ಣುವೇ ದೇವತೆಯಾಗಿದ್ದರೂ ಅವನ ರೂಪಗಳಲ್ಲಿ ಭೇದವಿರುವುದರಿಂದ ಹಾಗೂ ಅಧಿಷ್ಠಾನದಲ್ಲಿ ಭೇದವಿರುವುದರಿಂದ ಇಬ್ಬರು ದೇವತೆಗಳೆಂಬ ಪ್ರಯೋಗವನ್ನು ಮಾಡಲಾಗುತ್ತದೆ.

**गुरुराजीयम् –** हानादिव्यवहाराय व्यक्ताविवेति ।। यद्यपि 'कल्पनोपदेशाच्च' इत्यादिनाऽन्यत्रापि वक्ष्यमाणया मुख्यवृत्त्यैव व्यवहारः । तथापि समाकर्षादिति न्यायेन परममुख्यस्वारसिकप्राप्तस्य विष्णोः परित्यागेन किमर्थमन्यव्यवहार इत्यस्याः शङ्काया 'अतः कविर्नामसु यावदर्थस्स्यात्' इत्युक्तरीत्या व्यवहारार्थमित्युत्तरम् । अत्र मुख्यलाक्षणिकयोर्जातिव्यक्त्योरिव मुख्यामुख्यमात्रांशे दृष्टान्त इति ज्ञेयम् । अन्यथा नचेत्युत्तरवाक्यविरोधापत्तेरिति भावः । नन्वेवं ब्रह्मणि मुख्यानामन्यत्र

व्यवहारे लक्षणाद्यापत्त्य अग्न्यादिशब्दानामिन्द्रादाविन्द्रादिशब्दानामग्न्यादौ प्रयोगः स्यादित्यत आह – **अग्न्यादाविति** ।। नन्वग्न्यादौ वह्न्यादिशब्दप्रयोग इवेन्द्रादिशब्दानामपि प्रयोगे व्यवहारव्यवस्था किं न स्यात् । अन्यथा व्यवहारव्यवस्थानुपपत्त्या वह्न्यादिशब्दानामपि प्रयोगो न स्यादित्यतो वैषम्येण परिहरति – **न चाग्न्यादाविति** ।। ननु भृत्यो विजयीत्यत्र भृत्यशब्दस्य भृत्ये मुख्यत्वात्तदन्वयाय जयिशब्दस्य तत्रामुख्यतासम्भवेऽपि प्रकृतेऽपि सर्वेषामपि शब्दानां ब्रह्मणि मुख्यत्वेन ब्रह्मणोऽन्यत्र कस्यापि शब्दस्य मुख्यस्याभावात् । कस्यान्वयाय शब्दान्तरस्यामुख्यता स्यादित्यत आह – **अग्निर्दुःखीति** ।। **अन्ययेति** ।। सर्वथाऽग्न्यादिशब्दानामग्न्यादिपरत्वाभाव इत्यर्थः । अग्न्यादिशब्दानाम-मुख्यवृत्त्याऽप्यग्न्यादिपरत्वाभावेऽपि प्रत्यक्षेणैवाग्न्यादिसिद्धिरित्यत उक्तम् – **अलौकिकमिति** ।। **द्वितीय उक्तत्वादिति** ।। द्वितीयाध्याये प्रथमपादे गीतिषु समाख्येत्यस्मिन्नधिकरण उक्तत्वादित्यर्थः । ननु तयाऽप्येकदेवताकत्वात्कथं भेद इत्यत आह – **अन्ययेति** ।।




ಸಿದ್ಧಾಂತ ಹೀಗಿದೆ - ಅಜ್ಞಾನಿಗಳು ಅಜ್ಞಾನ ಪ್ರಯುಕ್ತವಾಗಿ ವಿಷ್ಣುಪರವಾದ ಶಬ್ದಗಳನ್ನು ಲೋಕದಲ್ಲಿ ಪ್ರಯೋಗಿಸಿದ್ದಾರೆ. ಅದರಂತೆ ಜ್ಞಾನಿಗಳೂ ಸಹ ಹಾನ, ಉಪಾದಾನ ಮೊದಲಾದ ವ್ಯವಹಾರಕ್ಕೋಸ್ಕರ ಲೋಕದಲ್ಲಿ ಪ್ರಯೋಗಿಸುತ್ತಾರೆ.

ವಸ್ತುತಃ ಸೂಕ್ತಾದಿವ್ಯವಸ್ಥೆಗೆ ಋಗ್ಭಾಷ್ಯದಲ್ಲಿ ಬೇರೆ ಕಾರಣವನ್ನೇ ಹೇಳಿದ್ದಾರೆ -

ಪೃಥಗ್ರೂಪಾಣಿ ವಿಷ್ಣೋಸ್ತು ದೇವತಾಂತರಗಾನಿ ಚ ।
ಅಗ್ನ್ಯಾದಿಸೂಕ್ತವಾಚ್ಯಾನಿ ನಾಮ್ನಾ ಸೂಕ್ತಭಿದಾ ಭವೇತ್ ॥

ಭಗವಂತನು ದೇವತಾಂತರ್ಗತನಾಗಿ ಹಾಗೂ ದೇವತೆಗಳಲ್ಲಿ ಅಂತರ್ಗತನಾಗದೇ ಎರಡು ರೂಪಗಳಿಂದ ಅಗ್ನಿ ಮೊದಲಾದ ಶಬಗಳಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ. ಈ ಎರಡು ರೂಪಗಳಲ್ಲಿರುವ ಅಗ್ನ್ಯಾದಿ ಶಬ್ದಗಳನ್ನು ವಿವಕ್ಷಿಸಿ ಅಗ್ನಿಸೂಕ್ತ, ವಾಯುಸೂಕ್ತ ಇತ್ಯಾದಿ ವ್ಯವಸ್ಥೆಯು ಇರುತ್ತದೆ.

ಹೀಗೆ ಅಗ್ನಿ ಮೊದಲಾದ ಶಬ್ದಗಳ ಪ್ರಯೋಗವೇ ಸೂಕ್ತಾದಿಗಳಿಗೆ ವ್ಯವಸ್ಥಾಪಕವೆಂದು ಹೇಳಿದ್ದಾರೆ.





ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

## तात्पर्यचन्द्रिका

**अत्र चाऽद्यसूत्रे स्वपक्षे श्रुतिरूपस्य साधकस्योक्तिः ।**[१]

---

(१) **शङ्करभाष्यम् –**

**भामती –**

**वैश्वानरः साधारणशब्दविशेषात् ॥** प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजलवुडिलाः समेत्य मीमांसां चक्रुः– को न आत्मा किं ब्रह्मेति ॥ आत्मेत्युक्ते जीवात्मनि प्रत्ययो मा भूदत उक्तं किं ब्रह्मेति । ते च मीमांसमाना निश्चयमनधिगच्छन्तः कैकेयराजं वैश्वानरविद्याविदमुपसेदुः । उपसद्य चोचुः– आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि स्मरसि तमेव नो ब्रूहीत्युपक्रम्य द्यु सूर्यवाय्वाकाशवारिपृथिवीनामिति ॥ अयमर्थः, वैश्वानरस्य भगवतो द्यौर्मूर्धा सुतेजाः । चक्षुश्च विश्वरूपः सूर्यः । प्राणो वायुः पृथग्वर्त्माऽत्मा पृथग् वर्त्म यस्य वायोः स पृथग्वर्त्मा । स एवाऽत्मा स्वभावो यस्य स पृथग्वर्त्माऽत्मा । सन्देहो देहस्य मध्यभागः स आकाशो बहुलः सर्वगतत्वात् । बस्तिरेव रयिः आपः, यतोऽद्भ्योऽन्नमन्नाच्च रयिर्धनं तस्मादापो रयिरुक्तास्तासां च मूत्रीभूतानां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तम् । पादौ पृथिवी । तत्र प्रतिष्ठानात् । तदेवं वैश्वानरावयवेषु द्युसूर्यानिलाऽकाशजलावनिषु मूर्धचक्षुःप्राणसन्देहबस्तिपादेष्वेकैकस्मिन् वैश्वानरबुद्ध्या विपरीततयोपासकानां प्राचीनशालादीनां मूर्धपातान्धत्वप्राणोत्क्रमणदेहशीर्णताबस्तिभेदपादशिथलीभावदूषणै-रुपासनानां निन्दया मूर्धादिसमस्तभावमुपदिश्याम्नायते 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति । स सर्वेषु लोकेषु द्युप्रभृतिषु सर्वेषु भूतेषु स्थावरजङ्गमेषु सर्वेष्वात्मसु देहेन्द्रियमनो-बुद्धिजीवेष्वन्नमत्ति । सर्वसम्बन्धिफलमाप्नोतीत्यर्थः ॥

अथास्य वैश्वानरस्य भोक्तुर्भोजनस्याग्निहोत्रतासम्पिपादयिषयाऽह – **उर एव वेदिः ॥** वेदिसारूप्यात् । लोमानि बर्हिः आस्तीर्णबर्हिः सारूप्यात् । हृदयं गार्हपत्यः । हृदयानन्तरं मनोऽन्वाहार्यपचनः । आस्यमाहवनीयः । तत्र हि तदन्नं हूयते । ननु 'को न आत्मा किं ब्रह्म' इत्युपक्रमे आत्मब्रह्मशब्दयोः परमात्मनि रूढत्वेन तदुपरक्तायां बुद्धौ वैश्वानराग्न्यादयः शब्दास्तदनुरोधेन परमात्मन्येव कथञ्चिन्नेतुं युज्यन्ते, नतु प्रथमावगतौ ब्रह्माऽत्मशब्दौ चरमावगतवैश्वानरादिपदानुरोधेनान्यथयितुं युज्येते । यद्यपि च वाजसनेयिनां वैश्वानरविद्योपक्रमे 'वैश्वानरं ह वै भगवान् सम्प्रति वेद तं नो ब्रूहि' इत्यत्र नाऽत्मब्रह्मशब्दौ स्तः, तथापि तत्समानार्थं छान्दोग्यवाक्यं तदुपक्रममिति तेन निश्चितार्थेन तदविरोधेन वाजसनेयिवाक्यार्थो निश्चीयते । निश्चितार्थेन ह्यनिश्चितार्थं व्यवस्थाप्यते,

नानिश्चितार्थेन निश्चितार्थम् । कर्मवच्च ब्रह्माऽपि सर्वशाखाप्रत्ययमेकमेव । नच द्युमूर्धत्वादिकं जाठरभूताग्निदेवताजीवात्मनामन्यतमस्यापि सम्भवति । नच सर्वलोकाश्रयफलभागिता । नच सर्वपाप्मप्रदाह इति पारिशेष्यात् परमात्मैव वैश्वानर इति निश्चिते कुतः पुनरियमाशङ्का ।

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेदिति ॥**

उच्यते, तदेवोपक्रमानुरोधेनान्यथा नीयते, यन्नेतुं शक्यम् । अशक्यौ च वैश्वानराग्निशब्दावन्यथा नेतुमिति शङ्कितुरभिमानः । अपिचान्तःप्रतिष्ठितत्वं च प्रादेशमात्रत्वं च न सर्वव्यापिनोऽपरिणामस्य च परब्रह्मणः सम्भवतः । नच प्राणाहुत्यधिकरणताऽन्यत्र जाठराग्नेर्युज्यते । नच गार्हपत्यादिहृदयादिता ब्रह्मणः सम्भविनी । तस्माद् यथायोगं जाठरभूताग्निदेवताजीवानामन्यतमो वैश्वानरः, नतु ब्रह्म । तथाच ब्रह्माऽत्मशब्दावुपक्रमगतावप्यन्यथा नेतव्यौ । द्युमूर्धत्वादयश्च स्तुतिमात्रम् । अथवा अग्निशरीराया देवताया ऐश्वर्ययोगाद् द्युमूर्धत्वादय उपपद्यन्त इति शङ्कितुरभिसन्धिः । अत्रोत्तरम्, न । कुतः? तथा दृष्ट्युपदेशात् । अद्धा चरममनन्यथासिद्धं प्रथमावगतमन्यथायति । न त्वत्र चरमस्यानन्यथासिद्धिः, प्रतीकोपदेशेन वा मनो ब्रह्मेतिवत्, तदुपाध्युपदेशेन वा 'मनोमयः प्राणशरीरो भारूपः' इतिवदुपपत्तेः । व्युत्पत्त्या वा वैश्वानराग्निशब्दयोर्ब्रह्मवचनत्वान्नान्यथासिद्धिः । तथाच ब्रह्माश्रयस्य प्रत्ययस्याश्रयान्तरे जाठरवैश्वानराह्वये क्षेपेण वा जाठरवैश्वानरोपाधिनि वा ब्रह्मण्युपास्ये वैश्वानरधर्माणां ब्रह्मधर्माणां च समावेश उपपद्यते ॥

असम्भवादिति सूत्रावयवं व्याचष्टे – **यदि चेह परमेश्वरो न विवक्ष्येतेति ॥** पुरुषमपि चैनमधीयत इति सूत्रावयवं व्याचष्टे – **यदि च केवल एवेति ॥** न ब्रह्मोपाधितया नापि प्रतीकतयेत्यर्थः । न केवलमन्तःप्रतिष्ठितं पुरुषमपीत्यपेरर्थः । अत एव 'यत्पुरुषः' इति पुरुषमनूद्य न वैश्वानरो विधीयते । तथा सति पुरुषे वैश्वानरदृष्टिरुपदिश्येत । एवञ्च परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यत इति भाष्यं विरुद्ध्येत । श्रुतिविरोधश्च । 'स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति वैश्वानरस्य हि पुरुषत्ववेदनमत्रानूद्यते, नतु पुरुषस्य वैश्वानरत्ववेदनम् । तस्मात् 'स एषोऽग्निर्वैश्वानरो यत्' इति यदः पूर्वेण सम्बन्धः , पुरुष इति तत्र पुरुषदृष्टेरुपदेश इति युक्तम् ॥२५-२६॥

**अत एव न देवता भूतं च ॥**

अत एवैतेभ्यः श्रुतिस्मृत्यवगतद्युमूर्धत्वादिसम्बन्धसर्वलोकाश्रयफलभागित्वसर्वपाप्मप्रदाहाऽत्मब्रह्मपदोपक्रमेभ्यो हेतुभ्य इत्यर्थः । 'यो भानुना पृथिवीं द्यामुतेमाम्' इति मन्त्रवर्णोऽपि न केवलौष्ण्यप्रकाशविभवमात्रस्य भूताग्नेरिममीदृशं महिमानमाह, अपितु ब्रह्मविकारतया

तादूप्येणेति भावः ।। २७ ।।

**साक्षादप्यविरोधं जैमिनिः ॥**

यदेतत् प्रकृतं मूर्धादिषु चुबुकान्तेषु पुरुषावयवेषु द्युप्रभृतीन् पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवान् सम्पाद्य पुरुषविधत्वं कल्पितम्, तदभिप्रायेणेदमुच्यते 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । अत्रावयवसम्पत्त्या पुरुषविधत्वं कार्यकारणसमुदायरूप-पुरुषावयवमूर्धादिचुबुकान्तःप्रतिष्ठानाच्च पुरुषेऽन्तः-प्रतिष्ठितत्वं समुदायमध्यपतितत्वात् तदवयवानां समुदायिनाम् । अत्रैव निदर्शनमाह – **यथा वृक्षे शाखामिति ॥** शाखाकाण्डमूलस्कन्धसमुदाये प्रतिष्ठिता शाखा तन्मध्यपतिता भवतीत्यर्थः । समाधानान्तरमाह – **अथवेति ॥** अन्तःप्रतिष्ठत्वं माध्यस्थ्यं तेन साक्षित्वं लक्षयति । एतदुक्तं भवति, वैश्वानरः परमात्मा चराचरसाक्षीति । पूर्वपक्षिणोऽनुशयमुन्मूलयति – **निश्चिते चेति ॥** विश्वात्मकत्वाद् वैश्वानरः प्रत्यगात्मा । विश्वेषां वाऽयं नरः, तद्विकारत्वाद् विश्वप्रपञ्चस्य। विश्वे नरा जीवा वा आत्मानोऽस्य तादात्म्येनेति ।।२८।।

**अभिव्यक्तेरित्याश्मरथ्यः ॥** साकल्येनोपलम्भासम्भवादुपासकानामनुग्रहायानन्तोऽपि परमेश्वरः प्रादेशमात्रमात्मानमभिव्यनक्तीत्याह – **अतिमात्रस्यापीति ॥** अतिक्रान्तो मात्रां परिमाणमतिमात्रः । उपासकानां कृते उपासकार्यमिति यावत् । व्याख्यान्तरमाह – **प्रदेशेषु वेति ।। २९-३० ।।**

**सम्पत्तेरिति जैमिनिः ॥** मूर्धानमुपक्रम्य चुबुकान्तो हि कायप्रदेशः प्रादेशमात्रः । तत्रैव त्रैलोक्याऽत्मनो वैश्वानरस्यावयवान्सम्पादयन् प्रादेशमात्रं वैश्वानरं दर्शयति ।। ३१ ।। अत्रैव जाबालश्रुतिसंवादमाह – **आमनन्ति चैनमस्मिन् ॥** अविमुक्ते अविद्योपाधिकल्पितावच्छेदे जीवात्मनि स खल्वविमुक्तः । तस्मिन् प्रतिष्ठितः परमात्मा, तादात्म्यात् । अत एव हि श्रुतिः 'अनेन जीवेनाऽत्मना' इति । अविद्याकल्पितत्वेन भेदमाश्रित्याधाराधेयभावः । वरणा भ्रूः । शेषमतिरोहितार्थम् ।। ३२ ।।

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकमीमांसाभाष्यविभागे भामत्यां
प्रथमाध्यायस्य द्वितीयः पादः ।।

**श्रीभाष्यम् –**

**वैश्वानरः साधारणशब्दविशेषात् ।। २५ ।।**

इदमामनन्ति छन्दोगाः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति प्रक्रम्य 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति । तत्र सन्देहः किमयं वैश्वानर आत्मा, परमात्मेति शक्यनिर्णयः? उत न? इति । किं प्राप्तम्? अशक्यनिर्णय इति । कुतः? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात् । जाठराग्नौ तावत्

'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यावदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति' इति । महाभूततृतीये च 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' इति । देवतायां च 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' इति । परमात्मनि च 'तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्' इति; 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति च । वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानी इति ।

एवं प्राप्तेऽभिधीयते – **वैश्वानरः साधारणशब्दविशेषात्** ॥ वैश्वानरः पर एवाऽत्मा, कुतः? साधारणशब्दविशेषात् । विशेष्यत इति विशेषः । साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः । तथाहि औपमन्यवादयः पञ्चेमे महर्षयस्समेत्य 'को न आत्मा किं ब्रह्म' इति विचार्य 'उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' इत्युद्दालकस्य वैश्वानराऽत्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालक एतान् वैश्वानराऽत्मजिज्ञासूनभिलक्ष्याऽत्मनश्च तत्राकृत्स्नवेदित्वं मत्वा तान् होवाच – 'अश्वपतिर्वै भगवन्तोऽयं केकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' इति । ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः । स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेनः' इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्यन्तेनाऽत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद् भगवद्भ्यो दास्यामि वसन्तु भवन्तः' इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवाऽत्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं 'को न आत्मा किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानराऽत्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानराऽत्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात् सर्वत्राऽत्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' 'तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च वक्ष्यमाणं वैश्वानराऽत्मविज्ञानफलं वैश्वानराऽत्मानं परं ब्रह्मेति ज्ञापयति ।। २५ ।।

इतश्च वैश्वानरः परमात्मा

**स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥**

द्युप्रभृति पृथिव्यन्तमव्यवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञानं वैश्वानरस्य

परमपुरुषत्वे अनुमानं लिङ्गमित्यर्थः । इतिशब्दः प्रकारवचनः । इत्थम्भूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथा आथर्वणे 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । अग्निरिह द्युलोकः । 'असौ वै लोकोऽग्निः' इति श्रुतेः । स्मरन्ति च मुनयः 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।। दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ।।' इति । 'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ।।' इति च । इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते । तथाहि तैरौपमन्यवप्रभृतिभिर्महर्षिभिः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पृष्टः केकयस्तेभ्यो वैश्वानराऽत्मानमुपदिदिक्षुः विशेषप्रश्नान् यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चिज्ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ । तत्र 'औपमन्यव, कं त्वमात्मानमुपास्से' इति पृष्टे, 'दिवमेव भगवो राजन्' इति तेन चोक्ते, दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या वैश्वानरांशभूताया दिवः 'सुतेजा' इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकमुपास्यमानतया कथितानां 'विश्वरूपः पृथग्वर्त्मा बहुलो रयिः प्रतिष्ठा' इत्येकैकगुणनामधेयानि वैश्वानराऽत्मनश्चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम् । सन्देहो मध्यकाय उच्यते । अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ।।२६।।

पुनरप्यनिर्णयमेवाऽशङ्क्य परिहरति –

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ।। २७ ।।**

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति, तन्न । शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद् वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते । अस्मिन् प्रकरणे च 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते । 'तद् यद् भक्तं प्रथममागच्छेत् तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात्, तां जुहुयात् प्राणाय स्वाहा' इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते । तथा वैश्वानरस्यास्मिन् पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनस्समा-

मनन्ति । 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । अतोऽग्निशब्दसामानाधिकरण्यात् । अग्नित्रेतापरिकल्पनात् प्राणाहुत्याधारभावादन्तः प्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्, तन्न ।

तथा दृष्ट्युपदेशात् । पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते । अपितु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेद्, असम्भवात् । जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्न-वैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।।' इति । जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते । किञ्च पुरुषमपि चैनमधीयते वाजसनेयिनः 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति । नहि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मन एव हि निरुपाधिकं पुरुषत्वम् । यथा 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वम्' इत्यादौ ।। २७ ।।

**अत एव न देवता भूतं च ॥ २८ ॥**

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ।। २८ ।।

**साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥**

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम् । तथैव परमात्मन उपास्यत्वं चोक्तम् । जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षाद् अव्यवधानेन वाचकत्वे न कश्चिद् विरोध इति मन्यते ।

एतदुक्तं भवति, यथा वैश्वानरशब्दस्साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते । एवमग्निशब्दोऽप्यग्रनय-नादिना येनैव गुणेन योगाज्ज्वलने वर्तते । तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ।। २९ ।।

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृति-पृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते । तत्राह –

ಹೇಳಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಪ್ರಥಮಸ್ಥಾನವನ್ನು ಈ ಸೂತ್ರವು ಪಡೆದಿದೆ.

**अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥**

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते । 'द्यौर्मूर्धा आदित्यश्चक्षुः वायुः प्राणः आकाशो मध्यकायः आपो वस्तिः पृथिवी पादौ' इति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ।। ३० ।।

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्, तत्राह –

**अनुस्मृतेर्बादरिः ॥ ३१ ॥**

तथोपासनार्थमिति बादरिराचार्यो मन्यते । 'यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते । स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते । एतमेवमिति उक्तप्रकारेण पुरुषाकारम् इत्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति । सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते । तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ।। ३१ ।।

यदि परमात्मा वैश्वानरः, कथं तर्ह्युरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह –

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥**

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथाहि परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः । 'स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत् स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति । तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ।।

**आमनन्ति चैनमस्मिन् ॥ ३३ ॥**

एवं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च । 'तस्य ह वा एतस्याऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिना । अयमर्थः 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिं च फलमुपादिश्य अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्य' इत्यादिनोपदिशति।

**द्वितीये समाख्यारूपस्य ।**

'ಓಂ ಸ್ಮರ್ಯಮಾಣಮನುಮಾನಂ ಸ್ಯಾದಿತಿ ಓಂ' ಎಂಬುದು ಎರಡನೆಯ ಸೂತ್ರ. ಇದರಲ್ಲಿ 'ಅಹಂ ವೈಶ್ವಾನರಃ' ಎಂಬ ಗೀತಾಸ್ಮೃತಿಯ ಸಮಾಖ್ಯಾಪ್ರಮಾಣವನ್ನು ನೀಡುವ ಮೂಲಕ ವಿಷ್ಣುವೇ ವೈಶ್ವಾನರನನಾಗಿದ್ದಾನೆಂದು ನಿರ್ಣಯಿಸಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಎರಡನೆಯ ಸ್ಥಾನವನ್ನು ಪಡೆದಿದೆ.

**अत्रेतिशब्दस्याऽऽद्यसूत्रानुषक्तेन 'विष्णुर्वैश्वानरः' इत्यनेनान्वयः । तथा च 'विष्णुर्वैश्वानरः' इति गीतायां स्मर्यमाणं विष्णोर्वैश्वानरत्वम् अत्रापि स एव वैश्वानर इत्यस्यानुमापकमिति सूत्राक्षरार्थः ।**

ಈ ಸೂತ್ರದಲ್ಲಿರುವ 'ಸ್ಯಾದಿತಿ' ಎಂಬಲ್ಲಿ ಇತಿ ಶಬ್ದವು ಮೊದಲನೆಯ ಸೂತ್ರದಲ್ಲಿರುವ 'ತತ್ತು' ಎಂಬುದರಿಂದ ತಿಳಿಯುವ 'ವಿಷ್ಣುಃ ವೈಶ್ವಾನರಃ' ಎಂಬುದರ ಜೊತೆಗೆ ಅನ್ವಯವನ್ನು ಹೊಂದುತ್ತದೆ. ಅಂದರೆ ಪ್ರಥಮಸೂತ್ರದಲ್ಲಿ ಪ್ರಸಕ್ತವಾದ 'ವಿಷ್ಣುಃ ವೈಶ್ವಾನರಃ' ಎಂಬುದನ್ನು ಈ ಸೂತ್ರದಲ್ಲಿ ಅನುಷಂಗ ಮಾಡಿಕೊಂಡು ಅನ್ವಯವನ್ನು ಹೇಳಬೇಕು. ಆದ್ದರಿಂದ ವಿಷ್ಣುವೇ ವೈಶ್ವಾನರನಾಗಿದ್ದಾನೆನ್ನಲು ಭಗವದ್ಗೀತೆಯಲ್ಲಿ ಹೇಳಿರುವುದು ಊಹೆ ಮಾಡಲು ಕಾರಣವಾಗಿದೆ. ಗೀತೆಯಲ್ಲಿ ವೈಶ್ವಾನರನಾದವನು ವಿಷ್ಣುವೆಂದು ಹೇಳಿದ್ದರಿಂದ ಅವನೇ ಇಲ್ಲಿರುವ ವೈಶ್ವಾನರ ಪದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗುತ್ತಾನೆಂದು ಊಹಿಸಬೇಕು. ಇಷ್ಟು ಎರಡನೆಯ ಸೂತ್ರದ ಅರ್ಥ.

**तृतीये वैश्वानरशब्दमात्रविषयासाधरणबाधकोद्धारः ।**

'ಓಂ ಶಬ್ದಾದಿಭ್ಯೋಽನ್ತಃ ಪ್ರತಿಷ್ಠಾನಾನ್ನೇತಿ ಚೇನ್ನ ತಥಾ ದೃಷ್ಟ್ಯುಪದೇಶಾದಸಂಭಾವತ್ಪುರುಷ-

---

यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति । मूर्धैव सुतेजाः उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा वायुरित्यर्थः । सन्देहो बहुलः उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । पृथिव्येव पादौ अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ।।

ವಿಧಮಪಿ ಚೈನಮಧೀಯತೇ ಓಂ' ಎಂಬುದು ಮೂರನೆಯ ಸೂತ್ರ. ಈ ಸೂತ್ರದಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದವು ಮಾತ್ರ ವಿಷಯದಲ್ಲಿರುವ ಅಸಾಧಾರಣವಾದ ಬಾಧಕವನ್ನು ಪರಿಹರಿಸಿದ್ದಾರೆ. ಉಳಿದ ಸೂತ್ರಗಳಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಉಪಲಕ್ಷಿತವಾದ ಅನೇಕ ಶಬ್ದಗಳ ವಿಷಯದಲ್ಲಿರುವ ಬಾಧಕಗಳನ್ನು ಪರಿಹರಿಸಿದ್ದಾರೆಂಬುದನ್ನು ತಿಳಿಯಬೇಕು.

**''तथा चेतोऽर्पणनिगदात्'' इत्यत्र ब्रह्मणि प्रसिद्धशब्दत्यागेन गायत्र्यादि-शब्दप्रयोगे प्रयोजनं नेत्याशङ्का निरस्ता,**

ಗಾಯತ್ರ್ಯಧಿಕರಣದಲ್ಲಿರುವ 'ತಥಾ ಚೇತೋಽರ್ಪಣನಿಗದಾತ್' ಎಂಬ ಸೂತ್ರಕ್ಕಿಂತ ಈ ಸೂತ್ರದಲ್ಲಿ ವೈಲಕ್ಷಣ್ಯವಿದೆ. ಗಾಯತ್ರ್ಯಧಿಕರಣದಲ್ಲಿ ಬ್ರಹ್ಮನಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದಗಳನ್ನು ಬಿಟ್ಟು ಬೇರೆ ಕಡೆ ಪ್ರಸಿದ್ಧವಾದ 'ಗಾಯತ್ರೀ' ಮೊದಲಾದ ಶಬ್ದಗಳನು ಪ್ರಯೋಗಿಸಲು ಏನು ಪ್ರಯೋಜನ? ಎಂಬ ಆಕಾಂಕ್ಷೆಗೆ ಉತ್ತರವನ್ನು ನೀಡಿದ್ದಾರೆ.

**अत्र त्वग्न्यादिशब्दानां पाचकत्वादिलिङ्गानां च ब्रह्मणि निरवकाशत्वशङ्कानिरस्यत इति भेदः ।**

ಈ ಸೂತ್ರದಲ್ಲಿ ಅಗ್ನಿ ಮೊದಲಾದ ಶಬ್ದಗಳು ಹಾಗೂ ಪಾಚಕತ್ವವೇ ಮೊದಲಾದ ಲಿಂಗಗಳು ಪರಮಾತ್ಮನಲ್ಲಿ ಹೇಗೆ ಬರುತ್ತವೆ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸಿದ್ದಾರೆ. ಹೀಗೆ ಎರಡೂ ಸೂತ್ರಗಳಿಗೆ ವೈಲಕ್ಷಣ್ಯವಿರುವುದರಿಂದ ಪುನರುಕ್ತಿ ದೋಷ ಬರುವುದಿಲ್ಲ.

**चतुर्थे परमतनिरासः ।**

'ಓಂ ಅತ, ಏವ ನ ದೇವತಾ ಭೂತಂ ಚ ಓಂ' ಎಂಬುದು ನಾಲ್ಕನೆಯ ಸೂತ್ರ. ಇದರಲ್ಲಿ ಪರಮತವನ್ನು ನಿರಾಸ ಮಾಡಿದ್ದಾರೆ.

**पञ्चमे प्रस्तुते वैश्वानरशब्दसमन्वये समाप्ते सर्वशब्दविषयसाधारण-बाधकोद्धाराय लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्य गत्युक्तिः ।**

'ಓಂ ಸಾಕ್ಷಾದಪ್ಯವಿರೋಧಂ ಜೈಮಿನಿಃ ಓಂ' ಎಂಬುದು ಐದನೆಯ ಸೂತ್ರ. ಈ ಸೂತ್ರದಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದದ ಸಮನ್ವಯವು ಸಮಾಪ್ತವಾದ ಮೇಲೆ ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಉಪಲಕ್ಷಿತವಾದ ಸಕಲಶಬ್ದಗಳ ವಿಷಯದಲ್ಲಿ ಪ್ರಸಕ್ತವಾದ ಅಸಾಧಾರಣ ಬಾಧಕಗಳನ್ನೆಲ್ಲಾ ಪರಿಹರಿಸಿದ್ದಾರೆ. ಅದಕ್ಕೋಸ್ಕರ ಬೇರೆ ಕಡೆ ಮಾಡುವ ಲೌಕಿಕ ವ್ಯವಹಾರಕ್ಕೆ ಹಾಗೂ ವೈದಿಕ ವ್ಯವಹಾರಕ್ಕೆ ಗತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**वाच्यार्थधीव्यवहितं लक्षणादिकं विना साक्षान्मुख्यवृत्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहाराविरोध इति चास्याक्षरार्थः ।**

ಸಕಲ ಶಬ್ದಗಳು ಬ್ರಹ್ಮನನ್ನು ಮುಖ್ಯವಾಗಿ ಪ್ರತಿಪಾದಿಸುತ್ತಿವೆ ಹೊರತು, ಲಕ್ಷಣಾ ವೃತ್ತಿಯಿಂದಲೋ, ಗೌಣೀವೃತ್ತಿಯಿಂದಲೋ ಪ್ರತಿಪಾದಿಸುತ್ತಿಲ್ಲ. ಲಕ್ಷಣಾದಿಗಳೆಲ್ಲವೂ ವಾಚ್ಯಾರ್ಥಜ್ಞಾನದಿಂದ ವ್ಯವಹಿತವಾಗಿವೆ. ಅಂದರೆ ವಾಚ್ಯಾರ್ಥಜ್ಞಾನ ಬಂದು ಅನಂತರ ಲಕ್ಷಣಾಜ್ಞಾನವು ಬರಬೇಕು. ಇಂತಹ ಲಕ್ಷಣಾದಿಗಳು ಬ್ರಹ್ಮನಲ್ಲಿ ಬರುವುದಿಲ್ಲ. ನೇರವಾಗಿ ಮುಖ್ಯವೃತ್ತಿಯಿಂದಲೇ ಸಕಲ ಶಬ್ದಗಳಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ. ಆದರೂ ಸಹ ಲೌಕಿಕ ವ್ಯವಹಾರದ ವಿರೋಧವು ಬರುವುದಿಲ್ಲವೆಂದು ಈ ಸೂತ್ರದ ಅರ್ಥ.

**षष्ठादिषु चतुर्षु साधारणबाधकोद्धाराय वैदिक्याः सूक्तादिव्यवस्थायाः गत्युक्तिः ।**

ಆರನೆಯ ಸೂತ್ರದಿಂದ ನಾಲ್ಕು ಸೂತ್ರಗಳಲ್ಲಿ ಸಾಧಾರಣವಾದ ಬಾಧಕಗಳನ್ನು ಪರಿಹರಿಸುವುದಕ್ಕಾಗಿ ವೈದಿಕಸೂಕ್ತಾದಿಗಳ ವ್ಯವಸ್ಥೆಗೆ ಗತಿಯನ್ನು ಹೇಳಿರುತ್ತಾರೆ.

**यद्यप्यनुस्मृत्यनन्तरमभिव्यक्तिरभिव्यक्त्यनन्तरं सम्पत्तिः । तथाऽप्यभिव्यक्त्यनन्तरमपि सम्पत्तेः प्राग् अनुस्मृतिरपेक्षितेति दर्शयितुम् अनुस्मृतेर्मध्ये उक्तिरिति सूत्रक्रमः ।**

ವಾಸ್ತವಿಕವಾಗಿ ಅನುಸ್ಮೃತಿಯು ಮೊದಲು ಅನಂತರ ಅಭಿವ್ಯಕ್ತಿ, ಅನಂತರ ಸಂಪತ್ತಿ, ಈ ಕ್ರಮದಲ್ಲಿಯೇ ಸೂತ್ರಗಳನ್ನು ಹೇಳಬೇಕು. ಅಂದರೆ ಮೊದಲು ಭಗವಂತನ ಧ್ಯಾನ; ಅನಂತರ ಸಾಕ್ಷಾತ್ಕಾರ; ಅನಂತರ ಭಗವಂತನ ಪ್ರಾಪ್ತಿಯಾಗುತ್ತದೆ. ಇದಕ್ಕನುಸಾರಿಯಾಗಿಯೇ ಸೂತ್ರಗಳನ್ನು ಹೇಳಬೇಕಿತ್ತು. ಆದರೆ ಅಭಿವ್ಯಕ್ತಿಯ ಅನಂತರ ಅನುಸ್ಮೃತಿಯನ್ನು ಸೂತ್ರದಲ್ಲಿ ಹೇಳಿದ್ದು ಏಕೆ? ಎಂಬ ಪ್ರಶ್ನೆ ಬರುತ್ತದೆ. ಆದರೆ ಸೂತ್ರಕಾರರು ಹೀಗೆ ವ್ಯತ್ಯಾಸ ಮಾಡಿ ಹೇಳಿದ್ದರಿಂದ ಒಂದು ಪ್ರಮೇಯವನ್ನು ತಿಳಿಸಿದ್ದಾರೆ. ಏನೆಂದರೆ ಅಪರೋಕ್ಷ ಜ್ಞಾನವಾದ ಮೇಲೂ ಸಹ ಭಗವಂತನ ಉಪಾಸನೆಯನ್ನು ಮಾಡಬೇಕು. ಇದನ್ನು ತಿಳಿಸುವುದಕ್ಕಾಗಿ ಮಧ್ಯದಲ್ಲಿ ಅನುಸ್ಮೃತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಒಂಭತ್ತು ಸೂತ್ರಗಳ ಜೋಡಣೆಯು ಅತ್ಯಂತ ಸ್ವಾರಸ್ಯಮಯವಾಗಿದೆ.

**नच ''साक्षात्'' इत्यादिसूत्रपञ्चकं समन्वयानुपपत्तिसमाधिरूपत्वादध्यायान्ते स्यादिति शङ्क्यम्,**

ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

ಶಂಕಾ - 'ಸಾಕ್ಷಾದಪ್ಯವಿರೋಧಂ' ಎಂಬ ಸೂತ್ರದಿಂದ ಪ್ರಾರಂಭಿಸಿ ನಾಲ್ಕು ಸೂತ್ರಗಳು ಸಮನ್ವಯದ ವಿಷಯದಲ್ಲಿ ಪ್ರಸಕ್ತವಾಗುವ ಅನುಪಪತ್ತಿಗೆ ಸಮಾಧಾನವನ್ನು ನೀಡುತ್ತಿವೆ. ಆದ್ದರಿಂದ ಸಮನ್ವಯಾಧ್ಯಾಯದ ಕೊನೆಯಲ್ಲಿಯೇ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳನ್ನು ಹೇಳಬೇಕಿತ್ತಲ್ಲವೇ?

**चतुर्थपादे पदवर्णस्वरादिसमन्वयस्यापि वक्ष्यमाणत्वात्तदवस्थायां च सूक्तादिभावस्यैवाभावेन तदनुपपत्तिशङ्कानुदयात्, तथाऽग्न्यादिसूक्तादिस्थपदादिसमन्वयनिष्ठानां पुंसामग्न्यादावेव ब्रह्मणोऽभिव्यक्त्यादेरभावेन परिहारासङ्गतेः,**

ಸಮಾಧಾನ - ಹೀಗೆ ಶಂಕಿಸಬಾರದು. ಏಕೆಂದರೆ ನಾಲ್ಕನೆಯ ಪಾದದಲ್ಲಿ ಪ್ರತಿಯೊಂದು ಪದ, ವರ್ಣ, ಸ್ವರ, ಇವುಗಳ ಸಮನ್ವಯವನ್ನೂ ಸಹ ಹೇಳುತ್ತಾರೆ. ಈ ಸಂದರ್ಭದಲ್ಲಿ ಸೂಕ್ತಗಳ ಸ್ವರೂಪವೇ ಅಪ್ರಸಕ್ತವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಅದರ ಮೇಲೆ ಬರುವ ಅನುಪಪತ್ತಿ ಶಂಕೆಯು ಹುಟ್ಟಲು ಸಾಧ್ಯವೇ ಇಲ್ಲ. ಮತ್ತು ಯಾವ ಉಪಾಸಕರು ಸೂಕ್ತಗಳಿಂದ ಭಗವಂತನನ್ನು ಆರಾಧಿಸುತ್ತಾರೋ, ಅಂತಹವರಿಗೆ ಭಗವಂತನು ಅಗ್ನಿ ಮೊದಲಾದ ಅಧಿಷ್ಠಾನಗಳಲ್ಲೇ ಪ್ರಾಪ್ಯನಾಗುತ್ತಾನೆ. ಆದರೆ ಯಾವ ಉಪಾಸಕರು ಸೂಕ್ತಗಳಲ್ಲಿರುವ ಪ್ರತಿಯೊಂದು ಪದ, ವರ್ಣ, ಸ್ವರಾದಿಗಳಿಂದ ಭಗವಂತನನ್ನು ಉಪಾಸನೆ ಮಾಡುತ್ತಾರೋ, ಅವರಿಗೆ ಕೇವಲ ಅಗ್ನಿ ಮೊದಲಾದ ಅಧಿಷ್ಠಾನದಲ್ಲಿ ಮಾತ್ರ ಪ್ರಾಪ್ಯನಾಗುವುದಲ್ಲ; ಅವರು ವ್ಯಾಪ್ತ್ಯೋಪಾಸಕರಾದ್ದರಿಂದ ಎಲ್ಲೆಡೆಯೂ ಭಗವಂತನು ಅವರಿಂದಲೇ ಪ್ರಾಪ್ಯನಾಗುತ್ತಾನೆ. ಈ ವಿಷಯವು ಚತುರ್ಥಪಾದದಲ್ಲಿ ಪ್ರಸಕ್ತವಾಗಿದೆ. ಆದ್ದರಿಂದ ಸೂಕ್ತವ್ಯವಸ್ಥೆಯ ಅನುಪಪತ್ತಿಯನ್ನು ಇಲ್ಲಿಯೇ ಪರಿಹರಿಸಬೇಕು. ಹೊರತು ನಾಲ್ಕನೇಯ ಪಾದದದಲ್ಲಿ ಪರಿಹರಿಸುವುದು ಅಸಂಗತವಾಗುತ್ತದೆ.

**तथोभयत्रप्रसिद्धसमन्वयोक्त्यनन्तरं ब्रह्मणि मुख्यत्वेऽन्यत्र प्रयोगो न स्यात् इत्याशङ्काया अन्यत्र मुख्यत्वे ब्रह्मणि स न स्यादिति प्रतिशङ्काप्रतिरुद्धत्वेनानुदयाच्च अत्रैव युक्तत्वादिति ।।**

ಇನ್ನು ಉಭಯಪ್ರಸಿದ್ಧಿ ಸಮನ್ವಯವನ್ನು ಪೂರ್ಣಗೊಳಿಸುವ ಮೂರನೆಯಪಾದದ ಕೊನೆಯಲ್ಲಿ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳನ್ನು ಉಲ್ಲೇಖಿಸಬೇಕಿತ್ತಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆ ಬರುತ್ತದೆ. ಆದರೆ ಉಭಯತ್ರಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದಗಳನ್ನು ಸಮನ್ವಯ ಮಾಡಿದ ಮೇಲೆ ಬ್ರಹ್ಮನಲ್ಲಿ ಸಕಲ ಸೂಕ್ತಗಳು ಮುಖ್ಯವಾಗಿರುವುದಾದರೆ ಬೇರೆ ದೇವತೆಗಳಲ್ಲಿ ಪ್ರಯೋಗವೇ ಮಾಡದಿರಬೇಕಾದೀತು ಎಂದು ಆಕ್ಷೇಪ ಮಾಡಿದಾಗ ಪ್ರತಿಯಾಗಿ ಬೇರೆ ಕಡೆ ಮುಖ್ಯವಾಗಿ ಪ್ರಯೋಗಿಸುವುದಾದರೆ ಬ್ರಹ್ಮನಲ್ಲಿಯೂ ಪ್ರಯೋಗವು ಬಾರದಿರಬೇಕಾದೀತೆಂಬ ಶಂಕೆಯನ್ನು ಮಾಡಲು ಬರುತ್ತದೆ. ಏಕೆಂದರೆ ಎರಡೂ ಕಡೆ ಸಮಾನವಾಗಿ ಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದಗಳ ಸಮನ್ವಯವು ಮೂರನೆಯ ಪಾದದಲ್ಲಿ ಪ್ರಸಕ್ತವಾದ್ದರಿಂದ.

ಹೀಗೆ ಪ್ರತಿ ಶಂಕೆಯಿಂದ ಪ್ರತಿರುದ್ಧವಾಗುವ ಕಾರಣ ಮತ್ತು ಈ ಶಂಕೆ ಹುಟ್ಟಲು ಅಲ್ಲಿ ಪ್ರಸಕ್ತಿಯೇ ಇಲ್ಲದ ಕಾರಣ ಮೂರನೆಯ ಪಾದದಲ್ಲಿಯೂ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳಿಗೆ ಸಂಗತಿಯಿರುವುದಿಲ್ಲ. ಈ ಕಾರಣದಿಂದ ಸೂತ್ರಕಾರರು ಎರಡನೆಯ ಪಾದದ ಕೊನೆಯಲ್ಲಿಯೇ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳನ್ನು ಹೇಳಿದ್ದಾರೆ.

**प्रकाशः –**

**आद्येति । ''वैश्वानरः साधारणशब्दविशेषात्'' इत्यत्र साधारणस्य श्रुतिलिङ्गयोर्निरवकाशत्वादिना अग्निविष्णवोः साधारणस्य वैश्वानरशब्दस्य ''आत्मनं वैश्वानरम्'' इत्यात्मशब्देन विशेषणादित्यात्मश्रुतिरूपस्येत्यर्थः ।**

ವಿವರಣೆ - 'ಓಂ ವೈಶ್ವಾನರಃ ಸಾಧಾರಣ ಶಬ್ದವಿಶೇಷಾತ್ ಓಂ' ಎಂದು ಪ್ರಥಮಸೂತ್ರ. ಈ ಸೂತ್ರದಲ್ಲಿರುವ 'ಸಾಧಾರಣ ಶಬ್ದವಿಶೇಷಾತ್' ಎಂಬ ಪದಕ್ಕೆ ಹೀಗರ್ಥ. ಶ್ರುತಿ ಹಾಗೂ ಲಿಂಗಗಳು ನಿರವಕಾಶವಾಗಿರುವುದರಿಂದ ಅಗ್ನಿ ಹಾಗೂ ವಿಷ್ಣು ಇಬ್ಬರಿಗೂ ಸಾಧಾರಣವಾಗಿ ವಾಚಕವಾದ ವೈಶ್ವಾನರ ಶಬ್ದಕ್ಕೆ 'ಆತ್ಮಾನಂ ವೈಶ್ವಾನರಮ್' ಎಂಬುದಾಗಿ ವಿಷ್ಣುವಿನಲ್ಲೇ ಪ್ರಸಿದ್ಧವಾದ 'ಆತ್ಮ' ಎಂಬ ಶಬ್ದವನ್ನು ವಿಶೇಷವನ್ನಾಗಿ ಹೇಳಿರುವುದರಿಂದ ವೈಶ್ವಾನರನು ವಿಷ್ಣುವೇ ಹೊರತು ಅಗ್ನಿಯಲ್ಲ. ಹೀಗೆ ಶ್ರುತಿಯನ್ನು ಸಾಧಕಪ್ರಮಾಣವನ್ನಾಗಿ ಈ ಸೂತ್ರ ಹೇಳಿದೆ. ಇದು 'ಆದ್ಯ' ಎಂಬ ಗ್ರಂಥದ ಅಭಿಪ್ರಾಯ.

**प्रकाशः – 'द्वितीये' ''स्मर्यमाणमनुमानं स्यात्'' इत्यत्र । ''अहं वैश्वानरो भूत्वा'' इति स्मृतिसमाख्यारूपस्य स्वपक्षे साधकस्येत्यर्थः ।**

ದ್ವಿತೀಯೇ ಎಂಬುದಕ್ಕೆ 'ಓಂ ಸ್ಮರ್ಯಮಾಣಮನುಮಾನಂ ಸ್ಯಾದಿತಿ ಓಂ' ಎಂಬುದು ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಎಂದರ್ಥ. ಈ ಸೂತ್ರದಲ್ಲಿ 'ಅಹಂ ವೈಶ್ವಾನರೋ ಭೂತ್ವಾ ಪ್ರಾಣಿನಾಂ ದೇಹಮಾಶ್ರಿತಃ' ನಾನು ವೈಶ್ವಾನರನೆನಿಸಿ ಪ್ರಾಣಿಗಳ ದೇಹವನ್ನು ಆಶ್ರಯಿಸಿದ್ದೇನೆ ಎಂದು ಭಗವದ್ಗೀತೆಯೆಂಬ ಸ್ಮೃತಿಯಲ್ಲಿ ಹೇಳಿರುವುದು ಪ್ರಕೃತದಲ್ಲಿ ವಿಷ್ಣುವೇ ವಾಚ್ಯನೆಂದು ಊಹೆ ಮಾಡಲು ಕಾರಣವಾಗುತ್ತದೆಂದು ಹೇಳಿದ್ದಾರೆ. ಹೀಗೆ 'ಸ್ಮೃತಿಸಮಾಖ್ಯಾ' ಎಂಬ ಸ್ವಪಕ್ಷ ಸಾಧಕವನ್ನು ಹೇಳುತ್ತಿದೆ. (ಸಮಾನೋಕ್ತಿಃ ಸಮಾಖ್ಯಾ, ಒಂದೇ ರೀತಿಯ ಎರಡು ಮಾತುಗಳು 'ಸಮಾಖ್ಯಾ' ಎನಿಸುತ್ತವೆ. ಭಗವದ್ಗೀತೆಯಲ್ಲಿ ವೈಶ್ವಾನರನು ತಾನಾಗಿದ್ದೇನೆಂದು ಶ್ರೀಕೃಷ್ಣ ಹೇಳಿಕೊಂಡಿದ್ದಾನೆ. ಛಾಂದೋಗ್ಯದಲ್ಲಿಯೂ ಅದೇ ವೈಶ್ವಾನರನ ವರ್ಣನೆ ಇದೆ. ಹಾಗಾಗಿ ಗೀತೆಯು ಛಾಂದೋಗ್ಯ ಶ್ರುತಿಗೆ ಸಮಾಖ್ಯಾ ಪ್ರಮಾಣವಾಗಿದೆ.)

**प्रकाशः** – अत्र परैरितिशब्दो यस्मादित्यर्थे व्याख्यातः । स न युक्तः, करणार्थल्युडन्तानुमानशब्देनैव तदर्थलाभेन इति शब्दाभावेऽप्यन्वय-सम्भवादतिशयाभावाच्च हेत्वर्थकत्वस्य व्यर्थत्वादिति भावेन तस्यार्थमाह –

**अत्रेति ।**

ಸೂತ್ರದಲ್ಲಿರುವ 'ಇತಿ' ಶಬ್ದಕ್ಕೆ ಅದ್ವೈತಿಗಳು 'ಯಸ್ಮಾತ್' 'ಯಾವ ಕಾರಣದಿಂದ' ಎಂಬರ್ಥವನ್ನು ಹೇಳುತ್ತಾರೆ. ಇದು ತಪ್ಪು. ಸೂತ್ರದಲ್ಲಿರುವ ಅನುಮಾನ ಶಬ್ದವು ಕರಣಾರ್ಥದಲ್ಲಿರುವ ಲ್ಯುಟ್ ಪ್ರತ್ಯಯಾಂತವಾಗಿದೆ. ಅದ್ದರಿಂದ ಅನುಮಾನ ಶಬ್ದದಿಂದಲೇ ಯಾವ ಕಾರಣದಿಂದ ಎಂಬರ್ಥವು ದೊರೆಯುವಾಗ 'ಇತಿ' ಶಬ್ದವಿಲ್ಲದಿದ್ದರೂ ಅನ್ವಯವನ್ನು ಮಾಡಬಹುದು. ಮತ್ತು ಅದ್ವೈತಿಗಳ ಅರ್ಥವನ್ನು ವಿವಕ್ಷಿಸಿದಾಗ ಯಾವುದೇ ಅತಿಶಯವೂ ಸಹ ಇರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಹೇತ್ವರ್ಥದಲ್ಲಿ 'ಇತಿ' ಶಬ್ದವನ್ನು ವಿವಕ್ಷಿಸುವುದು ವ್ಯರ್ಥವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಸೂತ್ರದಲ್ಲಿರುವ 'ಇತಿ' ಶಬ್ದಕ್ಕೆ ಸ್ಮರ್ಯಮಾಣ ಶಬ್ದಕ್ಕೆ ಅನ್ವಯ ಮಾಡಿದಾಗ 'ಇತಿ ಸ್ಮರ್ಯಮಾಣಮ್' ಎಂದಾಗುತ್ತದೆ. ಆಗ 'ಹೀಗೆ ಸ್ಮೃತಿಯಲ್ಲಿ ಹೇಳಿರುವುದು' ಎಂಬರ್ಥವನ್ನು ತಿಳಿಯಬೇಕು. 'ಅನುಮಾನಂ' ಎಂದರೆ 'ಅನುಮಾಪಕಮ್' ಎಂದರ್ಥ. ಸ್ಮೃತಿಯಲ್ಲಿ ಹೇಳಿರುವುದು ಅನುಮಾಪಕವಾಗಿದೆ ಎಂದು ನಾವು ಹೇಳುವಂತೆ 'ಇತಿ' ಶಬ್ದವು ಸಮಾಖ್ಯಾ ಪ್ರಮಾಣವನ್ನು ಸೂಚಿಸುತ್ತಿದೆಯೆಂದು ಹೇಳಬೇಕು. ಈ ಅಭಿಪ್ರಾಯದಿಂದ 'ಅತ್ರ' ಇತ್ಯಾದಿ ವಾಕ್ಯವು ಹೊರಟಿದೆ.

**प्रकाशः** – यद्वा – भाष्ये ''इतिशब्दः समाख्याप्रदर्शकः'' इत्युक्तम् । ''अनेन 'इति स्मर्यमाणम्' इत्यन्वयः सूचितो भवति'' इत्युक्तं टीकायाम् । तावता कथमर्थो लब्ध इत्यतः तद्व्यनक्ति – **अत्रेति ।**

ಅಥವಾ ಭಾಷ್ಯದಲ್ಲಿ ಮೇಲೆ ಹೇಳಿದಂತೆ 'ಇತಿಶಬ್ದಃ ಸಮಾಖ್ಯಾಪ್ರದರ್ಶಕಃ' ಇತಿ ಶಬ್ದವು ಸಮಾಖ್ಯಾಪ್ರಮಾಣವನ್ನು ಪ್ರದರ್ಶಿಸುತ್ತಿದೆ ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಟೀಕೆಯಲ್ಲಿಯೂ ಸಹ 'ಅನೇನ' 'ಇತಿ ಸ್ಮರ್ಯಮಾಣಂ' ಇತ್ಯನ್ವಯಃ ಸೂಚಿತೋ ಭವತಿ' ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ 'ಇತಿ ಸ್ಮರ್ಯಮಾಣಂ' ಎಂಬ ಅನ್ವಯವನ್ನು ಸೂಚಿಸಿದಂತಾಯಿತು' ಎಂದು ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ. ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ ಸೂತ್ರಾರ್ಥವನ್ನು ಏನು ಹೇಳಿದಂತಾಯಿತು? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಅತ್ರ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಅಂದರೆ ಪ್ರಥಮಸೂತ್ರದಿಂದ 'ವೈಶ್ವಾನರಃ ವಿಷ್ಣುಃ' ಎಂಬುದನ್ನು ಅನುಷಂಗ ಮಾಡಿಕೊಂಡಾಗ ಸಂಪೂರ್ಣ ಸೂತ್ರಾರ್ಥದ ಅಭಿಪ್ರಾಯವು ಸ್ಪಷ್ಟವಾಗುತ್ತದೆಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः** – आद्यसूत्रे ''तत्तु समन्वयात्'' इत्यतोऽनुवृत्तस्य 'तत्' इत्यस्यार्थानुवादः – **विष्णुरिति ।** अहंशब्दस्य विष्ण्ववतारभूतकृष्णार्थकत्वात् 'विष्णुर्वैश्वानर इति गीतायाम्' इत्युक्तम् ।

ಪ್ರಥಮಸೂತ್ರದಲ್ಲಿ 'ತತ್ತು ಸಮನ್ವಯಾತ್' ಎಂಬ ಸೂತ್ರದಿಂದ ಅನುವೃತ್ತವಾದ 'ತತ್' ಎಂಬ ಪದದ ಅರ್ಥದ ಅನುವಾದವನ್ನು 'ವಿಷ್ಣುಃ' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಹಾಗಾದರೆ ವಿಷ್ಣುವೇ ವೈಶ್ವಾನರನೆಂದು ಇಲ್ಲಿ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಆದರೆ ಗೀತೆಯಲ್ಲಿ 'ಅಹಂ ವೈಶ್ವಾನರಃ' ಎಂದಿದೆಯಲ್ಲವೇ? ಎಂಬ ಆಕಾಂಕ್ಷೆಯು ಪ್ರಾಪ್ತವಾದರೆ 'ಅಹಂ' ಶಬ್ದಕ್ಕೆ ವಿಷ್ಣುವಿನ ಅವತಾರನಾದ ಶ್ರೀಕೃಷ್ಣನೆಂದರ್ಥ. ಆದ್ದರಿಂದ 'ನಾನು ವೈಶ್ವಾನರನಾಗಿದ್ದೇನೆಂದು ಶ್ರೀಕೃಷ್ಣನು ಹೇಳಿದರೆ ವಿಷ್ಣುವೇ ವೈಶ್ವಾನರನು' ಎಂದು ಗೀತೆಯಲ್ಲಿ ಹೇಳಿದಂತಾಯಿತು.

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**प्रकाशः – तृतीय इति ।** ''शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते'' इत्यत्राग्न्यादिशब्दाद् होमाधारत्वगार्हपत्याद्यङ्गकत्वपाचकत्वादिलिङ्गेभ्यः ''योऽयमन्तःपुरुषे'' इति अन्तःप्रतिष्ठानान्न विष्णुरिति शङ्किते, अग्न्यादिनामलिङ्गादिमत्त्वेन उपासनोपदेशेन तेषां सावकाशत्वात्, ''को न आत्मा किं ब्रह्म'' इत्युक्ताऽत्मत्वादेरन्यत्रासम्भवात्, ''शीर्ष्णो द्यौस्समवर्तत'' इत्यादिना पुरुषसूक्तोक्तपुरुषसदृशस्यैवात्र ''मूर्धैव सुतेजाः'' इत्यादिनाऽभिधानाद् विष्णुरेवेति निरवकाशेन सावकाशस्य बाधोपपत्तेरित्युक्तत्वादिति भावः ।

ತೃತೀಯೇ ಎಂಬ ಪ್ರತೀಕದ ಅರ್ಥ ಹೀಗೆ - 'ಓಂ ಶಬ್ದಾದಿಭ್ಯೋಽಂತಃ ಪ್ರತಿಷ್ಠಾನಾನ್ನೇತಿ ಚೇನ್ನ ತಥಾ ದೃಷ್ಟ್ಯುಪದೇಶಾದಸಂಭಾವತ್ಪುರುಷ- ವಿಧಮಪಿ ಚೈನಮಧೀಯತೇ ಓಂ' ಎಂಬುದು ಮೂರನೆಯ ಸೂತ್ರ. ಈ ಸೂತ್ರದಲ್ಲಿ ಅಗ್ನಿ ಮೊದಲಾದ ಶಬ್ದಗಳ ಆಧಾರದಿಂದ ಹೋಮಾಧಾರತ್ವ, ಗಾರ್ಹಪತ್ಯಾದ್ಯಂಗಕತ್ವ, ಪಾಚಕತ್ವ ಮೊದಲಾದ ಲಿಂಗಗಳ ಆಧಾರದಿಂದ "ಯೋಽಯಮಂತಃಪುರುಷೇ" ಎಂಬುದಾಗಿ ದೇಹದ ಒಳಗೆ ಇರುವ ವೈಶ್ವಾನರನು ಅಗ್ನಿಯೇ ಆಗುತ್ತಾನೆ ಹೊರತು; ವಿಷ್ಣುವಲ್ಲ ಎಂದು ಆಶಂಕಿಸಿದರೆ ಅದು ಸರಿಯಲ್ಲ. ಏಕೆಂದರೆ ಅಗ್ನಿ ಮೊದಲಾದ ನಾಮಗಳಿಂದ ಹೋಮಾಧಾರತ್ವ ಮೊದಲಾದ ಲಿಂಗಗಳಿಂದ ವಿಷ್ಣುವನ್ನು ಉಪಾಸನೆ ಮಾಡುವುದಕ್ಕಾಗಿ ಶ್ರುತಿಯು ಹಾಗೇ ಹೇಳುತ್ತಿದೆ. ಆದ್ದರಿಂದ ಅಗ್ನಿವಿಷಯದಲ್ಲಿ ನೀವು ಹೇಳಿದ ಶ್ರುತಿಲಿಂಗಾದಿ ಪ್ರಮಾಣಗಳೆಲ್ಲವೂ ಸಾವಕಾಶವಾಗಿವೆ. ಮತ್ತು "ಕೋ ನ ಆತ್ಮಾ ಕಿಂ ಬ್ರಹ್ಮ" ಇತ್ಯಾದಿ ಶ್ರುತಿಗಳಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಆತ್ಮಾ ಮೊದಲಾದ ಶಬ್ದಗಳು ವಿಷ್ಣುವನ್ನು ಬಿಟ್ಟು ಬೇರೆ ಕಡೆ ಬರಲು ಸಾಧ್ಯವಿಲ್ಲ. ಮತ್ತು 'ಶೀರ್ಷ್ಣೋದ್ಯೌಃ ಸಮವರ್ತತ' ಇತ್ಯಾದಿಯಾಗಿ ಪುರುಷಸೂಕ್ತದಲ್ಲಿ ವರ್ಣಿಸಲ್ಪಟ್ಟ ಪುರುಷನೇ ಇಲ್ಲಿಯೂ ಸಹ 'ಮೂರ್ಧೈವ ಸುತೇಜಾಃ' ಇತ್ಯಾದಿಯಾಗಿ ವರ್ಣಿತನಾದ್ದರಿಂದ ವಿಷ್ಣುವೇ ವೈಶ್ವಾನರನೆಂದು ನಿರ್ಣಯಿಸಬಹುದು. ನಿರವಕಾಶವಾದ ಈ ಪ್ರಮಾಣಗಳಿಂದ ಸಾವಕಾಶವಾದ ಪೂರ್ವಪಕ್ಷ ಯುಕ್ತಿಗಳೆಲ್ಲವೂ ಬಾಧಿತವಾಗುತ್ತವೆಂದು ಮೂರನೆಯ ಸೂತ್ರದ ಅಭಿಪ್ರಾಯ.

**प्रकाशः – बाधकेति ।** यद्यपि ''असम्भवात्'' इत्याद्यंशेन साधकोक्तिरप्यस्ति, तथाऽपि तदुक्तेः परपक्षे बाधकोक्त्या बाधकनिरासेऽपि व्यापारात् 'बाधकोद्धारः' इत्युक्तम् । अत एव प्रकरणादित्यनुक्त्वा 'असम्भवात्' इत्युक्तम् ।

ವಾಸ್ತವಿಕವಾಗಿ ಸೂತ್ರದಲ್ಲಿ 'ಅಸಂಭವಾತ್' ಎಂಬ ಪದದಿಂದ ಸಾಧಕಪ್ರಮಾಣವನ್ನೂ ಹೇಳಿರುತ್ತಾರೆ. ಆದರೂ ಗ್ರಂಥಕಾರರು 'ಬಾಧಕೋದ್ಧಾರಃ' ಎಂದಷ್ಟೇ ಏಕೆ ಹೇಳಿದರು? ಎಂದರೆ 'ಅಸಂಭವಾತ್' ಎಂಬ ಪದವು ಸಾಧಕವನ್ನು ಹೇಳುವುದರ ಜೊತೆಗೆ ಪರಪಕ್ಷದಲ್ಲಿ ಬಾಧಕವನ್ನು ಹೇಳುವ ಮುಖಾಂತರ ಬಾಧಕದ

ಪರಿಹಾರವನ್ನು ಮಾಡುತ್ತಿದೆಯೆಂದು ತಿಳಿಸಬೇಕಾಗಿದೆ. ಆದ್ದರಿಂದಲೇ ಸೂತ್ರದಲ್ಲಿ 'ಪ್ರಕರಣಾತ್' ಎಂದು ಹೇಳದೇ 'ಅಸಂಭವಾತ್' ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಒಂದು ವೇಳೆ ಅಗ್ನಿಯು ವೈಶ್ವಾನರನಾದರೆ, ಆತ್ಮಶಬ್ದ, ಬ್ರಹ್ಮಶಬ್ದ ಮೊದಲಾದವುಗಳೆಲ್ಲವೂ ಅಸಂಭಾವಿತವಾಗುತ್ತದೆಂದು ಪರಪಕ್ಷದಲ್ಲಿ ಬಾಧಕವನ್ನು ತಿಳಿಸಿದ್ದಾರೆ.

**प्रकाशः** –"तथा दृष्टचपदेशात्" इत्यंशस्य गायत्र्यधिकरणोक्तेनापौनरुक्त्यमाह – **तथा चेतोऽर्पणेति** ।

ಗಾಯತ್ರ್ಯಧಿಕರಣದಲ್ಲಿ 'ತಥಾ ಚೇತೋಽರ್ಪಣೇತಿ' ಎಂದು ಹೇಳಿದ್ದನ್ನೇ ಈ ಸೂತ್ರದಲ್ಲಿ 'ತಥಾ ದೃಷ್ಟ್ಯುಪದೇಶಾತ್' ಎಂದು ಹೇಳುತ್ತಿದ್ದಾರೆ. ಆದ್ದರಿಂದ ಪುನರುಕ್ತಿ ದೋಷ ಬಂತಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ತಥಾ ಚೇತೋಽರ್ಪಣ' ಎಂಬ ಗ್ರಂಥದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಪರಮಾತ್ಮನಲ್ಲೇ ಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದಗಳನ್ನು ಬಿಟ್ಟು ಇತರತ್ರ ಪ್ರಸಿದ್ಧವಾದ ಶಬ್ದಗಳನ್ನೇಕೆ ಸಮನ್ವಯ ಮಾಡಬೇಕು ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ತಥಾ ಚೇತೋಽರ್ಪಣ ನಿಗದಾತ್' ಎಂಬ ಸೂತ್ರದಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ. ಇಲ್ಲಿ ಬೇರೆ ದೇವತೆಗಳನ್ನು ಪ್ರತಿಪಾದಿಸುವ ಶಬ್ದಗಳು ಪರಮಾತ್ಮನಲ್ಲಿ ಬರುವುದೇ ಇಲ್ಲವೆಂದು ಶಂಕೆಯು ಪ್ರಾಪ್ತವಾದರೆ ಉಪಾಸನೆಗೋಸ್ಕರ ಹಾಗೇ ಶ್ರುತಿಗಳು ಹೇಳುತ್ತವೆಂದು ಉತ್ತರಿಸಿದ್ದಾರೆ. ಹೀಗೆ ವಿಷಯ ಒಂದೇ ಆದರೂ ಪ್ರಯೋಜನಗಳು ಬೇರೆಯಾಗಿರುವುದರಿಂದ ವೈಲಕ್ಷಣ್ಯವನ್ನು ತಿಳಿಯಬೇಕು.

**प्रकाशः – चतुर्थ इति** । "अत एव न देवता भूतं च" इत्यत्र 'अत एव' निरवकाशाऽत्मशब्दादिहेतोरेव देवतादिर्नेत्यर्थः । साधकोक्तिबाधकोद्धारयोरनन्तरं परमतनिरासस्यावसरप्राप्तेरिति भावः ।

ಚತುರ್ಥೇ ಎಂಬ ಪ್ರತೀಕದ ಅಭಿಪ್ರಾಯ ಹೀಗೆ - 'ಓಂ ಅತ ಏವ ನ ದೇವತಾ ಭೂತಂ ಚ ಓಂ' ಎಂಬುದು ನಾಲ್ಕನೆಯ ಸೂತ್ರ. ಈ ಸೂತ್ರದಲ್ಲಿ ಅತಏವ = ನಿರವಕಾಶವಾದ ಆತ್ಮಶಬ್ದವೇ ಮೊದಲಾದ ಹೇತುಗಳಿಂದಲೇ ವೈಶ್ವಾನರ ಪ್ರಕರಣದಲ್ಲಿ ಅಗ್ನಿದೇವತೆಯು ಪ್ರತಿಪಾದ್ಯನಲ್ಲವೆಂದು ಹೇಳಿರುತ್ತಾರೆ.

ಹೀಗೆ ಮೊದಲ ನಾಲ್ಕು ಸೂತ್ರಗಳಲ್ಲಿ ಸಾಧಕ ಪ್ರಮಾಣಗಳನ್ನು ಹಾಗೂ ಬಾಧಕ ಪ್ರಮಾಣಗಳಿಲ್ಲವೆಂದು ಹೇಳಿದನಂತರವೇ ಮುಂದೆ ಪರಮತ ನಿರಾಸವನ್ನು ಮಾಡಲು ಅವಕಾಶ ಬರುತ್ತದೆ ಎಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः – पञ्चम इति** । "साक्षादप्यविरोधं जैमिनिः" इत्यत्र । **षष्ठादिष्विति** । "अभिव्यक्तेरित्याश्मरथ्यः" "अनुस्मृतेर्बादरिः" "सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति" "आमनन्ति चैनमस्मिन्" इत्येतेषु । **साधारणेति** । उक्तवक्ष्यमाणसर्वशब्दसाधारणेत्यर्थः ।

'ಪಂಚಮೇ' ಎಂದರೆ 'ಸಾಕ್ಷಾದಪ್ಯವಿರೋಧಂ ಜೈಮಿನಿಃ' ಎಂಬ ಐದನೆಯ ಸೂತ್ರದಲ್ಲಿ ಲೌಕಿಕವಾದ, ವೈದಿಕವಾದ ಅನ್ಯತ್ರವ್ಯವಹಾರಕ್ಕೆ ಗತಿಯನ್ನು ಹೇಳಿದ್ದಾರೆ. 'ಷಷ್ಠಾದಿಷು' ಎಂದರೆ 'ಅಭಿವ್ಯಕ್ತೇರಿತ್ಯಾಶ್ಮರಥ್ಯಃ' 'ಅನುಸ್ಮೃತೇರ್ಬಾದರಿಃ' 'ಸಂಪತ್ತೇರಿತಿ ಜೈಮಿನಿಸ್ತಥಾ ಹಿ ದರ್ಶಯತಿ' 'ಆಮನಂತಿ ಚೈನಮಸ್ಮಿನ್'

ಎಂಬುದಾಗಿ ಆರನೆಯ ಸೂತ್ರದಿಂದ ಒಂಭತ್ತನೆಯ ಸೂತ್ರದ ತನಕ ನಾಲ್ಕು ಸೂತ್ರಗಳಲ್ಲಿ ವೈದಿಕವಾದ ಸೂಕ್ತಾದಿ ವ್ಯವಸ್ಥೆಗಳನ್ನು ಮಾಡಿರುತ್ತಾರೆ ಎಂದರ್ಥ. 'ಸಾಧರಣ' ಎಂದರೆ ಹಿಂದೆ ಹೇಳಿದ, ಮುಂದೆ ಹೇಳುವ ಸಕಲ ಶಬ್ದಗಳಲ್ಲಿ ಸಾಧಾರಣವಾದ ಬಾಧಕಗಳನ್ನು ಪರಿಹರಿಸುವುದಕ್ಕಾಗಿ ಎಂದರ್ಥ.

**प्रकाशः – तत्रापि पौर्वापर्यमाक्षिप्य समाधत्ते – यद्यपीति । पञ्चमादेरत्रानिवेशमाशङ्क्य त्रेधा समाधिमाह – नचेति ।**

ಮೊದಲು 'ಅನುಸ್ಮೃತೇರ್ಬಾದರಿಃ' ಎಂಬ ಸೂತ್ರವನ್ನು ಹೇಳಿ 'ಅಭಿವ್ಯಕ್ತೇರಿತ್ಯಾಶ್ಮರಥ್ಯಃ' ಎಂಬ ಸೂತ್ರವನ್ನು ನಂತರ ಹೇಳಬೇಕಿತ್ತಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ಯದ್ಯಪಿ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಸಮಾಧಾನ ನೀಡುತ್ತಿದ್ದಾರೆ. ಐದನೆಯ ಸೂತ್ರದಲ್ಲಿ ನಾಲ್ಕುಸೂತ್ರಗಳನ್ನು ಎರಡನೆಯ ಪಾದದ ಕೊನೆಯಲ್ಲೇಕೆ ನಿವೇಶ ಮಾಡಿದ್ದಾರೆ. ಅಧ್ಯಾಯದ ಕೊನೆಯಲ್ಲಿ ನಿವೇಶ ಮಾಡಬೇಕಿತ್ತಲ್ಲವೇ? ಎಂಬ ಆಕಾಂಕ್ಷೆಗೆ ಮೂರು ಬಗೆಯಲ್ಲಿ ಸಮಾಧಾನವನ್ನು ನೀಡುತ್ತಿದ್ದಾರೆ 'ನಚ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ.

**प्रकाशः – पदादीति । पदवर्णस्वरादिसमन्वयादिनिष्ठानां चतुर्मुखाद्युत्तमाधिकारित्वेन तेषां व्याप्तदर्शित्वादिति भावः । तर्हि तृतीयपादान्ते निवेशः स्यादित्यत आह – तथोभयत्रेति ।।**

ನಾಲ್ಕನೆಯ ಪಾದದಲ್ಲಿ ಪದ, ವರ್ಣ, ಸ್ವರ ಮೊದಲಾದ ಸಮನ್ವಯವನ್ನು ತಿಳಿಯುವಂತಹ ಚತುರ್ಮುಖಬ್ರಹ್ಮದೇವರೇ ಮೊದಲಾದ ಉತ್ತರಾಧಿಕಾರಿಗಳು ಪ್ರಸಕ್ತರಾಗಿದ್ದಾರೆ. ಅಂತಹ ವ್ಯಾಪ್ತದರ್ಶಿಗಳಿಗೆ ಭಗವಂತನು ಎಲ್ಲಾ ಅಧಿಷ್ಠಾನಗಳಲ್ಲಿಯೂ ಉಪಾಸನೆಗೆ ಅರ್ಹನಾಗಿದ್ದಾನೆ. ಕೇವಲ ಅಗ್ನಿ ಮೊದಲಾದ ಒಂದೊಂದು ಅಧಿಷ್ಠಾನಗಳನ್ನು ಹೇಳುವುದು ತಪ್ಪಾಗುತ್ತದೆ. ವ್ಯಾಪ್ತ್ಯೋಪಾಸ್ಯನಾದ್ದರಿಂದ ಎಲ್ಲೆಡೆ ಭಗವಂತನು ಉಪಾಸನೆಗೆ ಅರ್ಹನಾಗಿರುತ್ತಾನೆ. ಆದ್ದರಿಂದ ಈ ಸೂತ್ರಗಳಿಗೆ ಅಲ್ಲಿ ಅವಕಾಶವಿರುವುದಿಲ್ಲ. ಹಾಗಾದರೆ ಮೂರನೆಯ ಪಾದದ ಕೊನೆಯಲ್ಲಿ ನಿವೇಶ ಮಾಡಬಹುದಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ 'ತಥೋಭಯತ್ರ' ಎಂಬ ಗ್ರಂಥದಿಂದ ಉತ್ತರಿಸಿದ್ದಾರೆ.

**गुरुराजीयम् – सूत्राक्षरार्थ इति ।** इदंशब्दवदितिशब्देन पूर्वसूत्रे प्रकृतवैश्वानरविष्णुपरामर्शात् तस्य स्मर्यमाणत्वोक्त्या स्मृतिश्रुत्योरेकार्थत्वप्रदर्शनेन समाख्याप्रदर्शकत्वं भाष्य इतिशब्दस्योक्तमिति भावः ।

## ಸಾರ

ಪ್ರಥಮಸೂತ್ರದಲ್ಲಿ ಶ್ರುತಿ ಎಂಬ ಸಾಧಕ ಪ್ರಮಾಣವನ್ನು ಹೇಳಿರುತ್ತಾರೆ. ಎರಡನೆಯ ಸೂತ್ರದಲ್ಲಿ ಸಮಾಖ್ಯಾಪ್ರಮಾಣವನ್ನು ಹೇಳಿರುತ್ತಾರೆ. ಸ್ವಪಕ್ಷ ಸಾಧಕವನ್ನು ಹೇಳಿದ ಮೇಲೆ ಮೂರನೆಯ ಸೂತ್ರದಲ್ಲಿ ವೈಶ್ವಾನರ ಶ್ರುತಿಯಲ್ಲಿರುವ ಅಸಾಧಾರಣವಾದ ಬಾಧಕವನ್ನು ಪರಿಹರಿಸಿದ್ದಾರೆ. ನಾಲ್ಕನೆಯ ಸೂತ್ರದಲ್ಲಿ ಪರಮತ ನಿರಾಕರಣೆ

ಇದೆ. ಐದನೆಯ ಸೂತ್ರದಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದದ ಸಮನ್ವಯವು ಸಿದ್ಧವಾಯಿತಾದ್ದರಿಂದ ಸಕಲ ಶಬ್ದಗಳ ವಿಷಯದಲ್ಲಿರುವ ಬಾಧಕವನ್ನು ಪರಿಹರಿಸಿದ್ದಾರೆ. ಆರನೆಯ ಸೂತ್ರದಿಂದ ಮುಂದಿನ ನಾಲ್ಕು ಸೂತ್ರಗಳಲ್ಲಿ ವೇದದಲ್ಲಿರುವ ಸೂಕ್ತಾದಿ ವ್ಯವಸ್ಥೆಗಳನ್ನು ಅನೇಕ ಬಗೆಯಲ್ಲಿ ಸಮರ್ಥಿಸಿದ್ದಾರೆ. ಈ ಕ್ರಮದಲ್ಲಿ ಚಿಂತಿಸಿದಾಗ ಸೂತ್ರಗಳ ಜೋಡಣೆಯು ಅತ್ಯಂತ ಸ್ವರಸವಾಗಿದೆಯೆಂದು ಸ್ಪಷ್ಟವಾಗಿ ತಿಳಿಯುತ್ತದೆ.

ಕೊನೆಯ ನಾಲ್ಕು ಸೂತ್ರಗಳು ವೈಶ್ವಾನರವೆಂಬ ನಾಮಾತ್ಮಕ ಶಬ್ದದ ಸಮನ್ವಯಕ್ಕಾಗಿ ಹೊರಟಿರುವುದಿಲ್ಲ. ಸಕಲ ಶಬ್ದಗಳ ಸಮನ್ವಯವನ್ನು ಭಗವಂತನಲ್ಲೇ ಮಾಡಿದಾಗ ಬರುವಂತಹ ಬಾಧಕವನ್ನಷ್ಟೇ ಪರಿಹರಿಸಿದೆ. ವಾಸ್ತವಿಕವಾಗಿ ನಾಲ್ಕನೆಯ ಪಾದದ ಕೊನೆಯಲ್ಲಿ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳನ್ನು ಹೇಳಬೇಕಿತ್ತು ಎಂದೆನಿಸುತ್ತದೆ. ಆದರೆ ಕೇವಲ ಪದ, ವರ್ಣ ಸ್ವರಗಳ, ಸಮನ್ವಯದಲ್ಲಿ ಪರ್ಯವಸಾನ ಗೊಳ್ಳುವ ನಾಲ್ಕನೆಯ ಪಾದದಲ್ಲಿ ಈ ಸೂತ್ರಗಳು ಅಸಂಗತವೇ ಆಗುತ್ತಿದ್ದವು. ಆದ್ದರಿಂದ ಸೂತ್ರಕಾರರು ನಾಮಾತ್ಮಕ ಹಾಗೂ ಲಿಂಗಾತ್ಮಕ ಶಬ್ದಗಳ ಸಮನ್ವಯವು ಮುಗಿಯುತ್ತಿರುವ ಸಂದರ್ಭದಲ್ಲಿ ಈ ನಾಲ್ಕು ಸೂತ್ರಗಳನ್ನು ಹೇಳಿದ್ದು ಅತ್ಯಂತ ಸಂಗತವೇ ಆಗಿದೆ.



## ಶಂಕರ, ರಾಮಾನುಜರ ಪ್ರಥಮ ಸೂತ್ರಾರ್ಥ ವಿಮರ್ಶೆ

### तात्पर्यचन्द्रिका

**अन्ये तु – "अयमग्निर्वैश्वानरः" इत्यादिप्रयोगात् जाठरभूताग्निदेवतारूपत्रय-साधारणस्य वैश्वानरशब्दस्य, जीवेश्वरसाधारणस्याऽत्मशब्दस्य च "मूर्धैव सुतेजाः" इति द्युमूर्धत्वादिना विशेषणादित्याद्यसूत्रार्थ इत्याहुः ।**

ಅನುವಾದ - ಶಾಂಕರ ಭಾಷ್ಯದಲ್ಲಿ ಸೂತ್ರಾರ್ಥವನ್ನು ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ - ಛಾಂದೋಗ್ಯದಲ್ಲಿ 'ಅಯಮಗ್ನಿರ್ವೈಶ್ವಾನರಃ' ಎಂಬುದಾಗಿ ವೈಶ್ವಾನರ ಶಬ್ದವು ಕೇಳಿಸುತ್ತಿದೆ. ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ ಮೂವರಲ್ಲಿಯೂ ವೈಶ್ವಾನರ ಶಬ್ದವು ಸಮಾನವಾಗಿ ಪ್ರಯೋಗಿಸಲ್ಪಡುತ್ತದೆ. ಪ್ರಕರಣದ ಪ್ರಾರಂಭದಲ್ಲಿ ಜೀವ ಹಾಗೂ ಈಶ್ವರರಲ್ಲಿ ಸಾಧಾರಣವಾದ ಆತ್ಮಶಬ್ದವು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ ಜೀವನೂ ಸಹ ವೈಶ್ವಾನರನೆನಿಸಬಹುದು. ಇಷ್ಟು ಪೂರ್ವಪಕ್ಷ.

ವೈಶ್ವಾನರ ಹಾಗೂ ಆತ್ಮಶಬ್ದಗಳು ಸಾಧಾರವಾಗಿದ್ದರೂ 'ಮೂರ್ಧೈವ ಸುತೇಜಾಃ' ಇತ್ಯಾದಿಯಾಗಿ ಸ್ವರ್ಗಾದಿಲೋಕಗಳೇ ವೈಶ್ವಾರನ ಅವಯವವಾಗಿದೆಯೆಂದು ಶ್ರುತಿಹೇಳುತ್ತಿದೆ. ಹೀಗೆ ಜೀವನಲ್ಲಿಲ್ಲದ ವಿಶೇಷಣಗಳನ್ನು ವೈಶ್ವಾನರಲ್ಲಿ ಹೇಳಿದ್ದರಿಂದ ಬ್ರಹ್ಮನೇ ಇಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ.

**तन्न, "सोऽयमात्मा चतुष्पात्, स्थूलभुग्वैश्वानरः" इत्यात्मन्यपि वैश्वानरशब्ददर्शनेन त्रितयसाधारण्योक्त्ययोगात् ।**

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

ವೈಶ್ವಾನರ ಶಬ್ದವು ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ ಮೂರರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾಗಿದೆ. ಆದ್ದರಿಂದ ಬ್ರಹ್ಮನು ವೈಶ್ವಾನರನಾಗುವುದಿಲ್ಲವೆಂಬ ವ್ಯಾಖ್ಯಾನವೇ ತಪ್ಪು. 'ಸೋಽಯಮಾತ್ಮಾ ಚತುಷ್ಪಾತ್, ಸ್ಥೂಲಭುಗ್ವೈಶ್ವಾನರಃ' ಎಂದು ಮಾಂಡೂಕ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ ವೈಶ್ವಾನರಶಬ್ದವನ್ನು ಬ್ರಹ್ಮನಲ್ಲಿಯೂ ಮಾಡಲಾಗಿದೆ. ಹೀಗಿರುವಾಗ ವೈಶ್ವಾನರ ಶಬ್ದವು ಮೂರರಲ್ಲಿ ಮಾತ್ರ ಸಾಧಾರಣವೆಂದು ಹೇಳಿದ್ದು ಅಯುಕ್ತವಾಗುತ್ತದೆ.

**जाठराग्नेरपि भूतजातित्वेन पृथगुक्त्ययोगाच्च ।**

ಮತ್ತು ಜಾಠರಾಗ್ನಿಯೂ ಸಹ ಅಗ್ನಿಜಾತಿಯಾದ್ದರಿಂದ ಭೂತಾಗ್ನಿಯಲ್ಲಿಯೇ ಸೇರುವಾಗ ಪ್ರತ್ಯೇಕವಾಗಿ ಪರಿಗಣಿಸಿದ್ದು ತಪ್ಪಾಗುತ್ತದೆ.

**भाष्योक्तश्रुत्यादिभिरात्मशब्दस्य ब्रह्मण्येव मुख्यतया जीवसाधारणाभावाच्च ।**

ಆತ್ಮ ಶಬ್ದವು ಜೀವ ಹಾಗೂ ಬ್ರಹ್ಮರಲ್ಲಿ ಸಾಧಾರವಾಗಿವೆಯೆಂದು ಅದ್ವೈತಿಗಳು ಹೇಳಿದರು. ಆದರೆ ಭಾಷ್ಯದಲ್ಲಿ ಉದಾಹರಿಸಿದ ಅನೇಕ ಶ್ರುತಿ, ಸ್ಮೃತಿಗಳಿಂದ ಬ್ರಹ್ಮನಲ್ಲಿ ಮಾತ್ರ ಆತ್ಮಶಬ್ದವು ಮುಖ್ಯವಾಗಿರುತ್ತದೆಂದು ತಿಳಿಯುತ್ತವೆ. ಹೀಗಿರುವಾಗ ಜೀವಬ್ರಹ್ಮರಲ್ಲಿ ಸಾಧಾರಣವಾಗಿದೆಯೆಂದು ಹೇಳುವುದು ಅಯುಕ್ತವಾಗಿದೆ.

**स्वीकृतं च त्वयाऽपि ''द्युभ्वाद्यायतनम्'' इत्यत्रात्मशब्दस्य ब्रह्मासाधारण्यम् । अन्यथा ''तमेवैकं जानथ आत्मानम्'' इत्यात्मशब्दस्य जीवशब्दत्वेन सूत्रे 'अतच्छब्दात्' इति हेतुना जीवनिरासस्य, 'स्वशब्दात्' इत्यनेनोक्तात्मशब्देन ब्रह्मत्वसाधनस्य चायोगात् ॥**

ನೀವೂ ಸಹ ಆತ್ಮಶಬ್ದವು ಬ್ರಹ್ಮನಲ್ಲಿ ಅಸಾಧಾರಣವಾಗಿದೆಯೆಂದು 'ದ್ಯುಭ್ವಾದ್ಯಾಯತನಮ್' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಒಪ್ಪಿದ್ದೀರಿ. ಇಲ್ಲದಿದ್ದರೆ 'ತಮೇವೈಕಂ ಜಾನಥ ಆತ್ಮಾನಮ್' ಎಂಬಲ್ಲಿ ಆತ್ಮಶಬ್ದವು ಜೀವಪ್ರತಿಪಾದಕವಾಗುವುದರಿಂದ ಸೂತ್ರದಲ್ಲಿ 'ಅತಚ್ಛಬ್ದಾತ್' ಎಂಬ ಹೇತುವಿನಿಂದ ಜೀವನನ್ನು ನಿರಾಸ ಮಾಡಿದಂತಾಗುವುದಿಲ್ಲ. 'ಸ್ವಶಬ್ದಾತ್' ಎಂಬ ಸೂತ್ರದ ಭಾಗದಿಂದ ಹೇಳಲ್ಪಟ್ಟ ಆತ್ಮಶಬ್ದದಿಂದ ದ್ಯುಭ್ವಾದ್ಯಾಯತನನಾಗುವವನು ಬ್ರಹ್ಮನೇ ಆಗಿದ್ದಾನೆಂದೂ ಸಹ ನಿರ್ಣಯಿಸಲು ಆಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಅದ್ವೈತಿಗಳ ಪ್ರಥಮಸೂತ್ರವ್ಯಾಖ್ಯಾನವು ಅಸಾಧುವಾಗಿದೆ.

**केचित्तु – जाठरभूताग्निदेवतेश्वररूपचतुष्टयसाधारणस्य वैश्वानरशब्दस्य, मुमुक्षुभिरौपमन्यवप्रभृतिभिर्जिज्ञास्यमानत्वादिभिर्ब्रह्मलिङ्गैर्विशेषणादित्यर्थ इत्याहुः।**
ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

ರಾಮಾನುಜರ ಪ್ರಥಮಸೂತ್ರವ್ಯಾಖ್ಯಾನ ಹೀಗಿದೆ - ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ, ಪರಬ್ರಹ್ಮ ಈ ನಾಲ್ಕರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾದ ವೈಶ್ವಾನರಶಬ್ದಕ್ಕೆ ಪರಮಾತ್ಮನಲ್ಲಿ ಮಾತ್ರ ಇರುವ ಧರ್ಮಗಳನ್ನು ವಿಶೇಷಣವನ್ನಾಗಿ ಹೇಳಲಾಗಿದೆ. ಮುಮುಕ್ಷುಗಳಾದ ಔಪಮನ್ಯುವೇ ಮೊದಲಾದ ಐದು ಮಂದಿ ಶಿಷ್ಯಂದಿರು ಬ್ರಹ್ಮನ ಜಿಜ್ಞಾಸೆಯನ್ನು ಮಾಡಿದ್ದಾರೆ. ಆವಾಗ ವೈಶ್ವಾನರನೇ ಬ್ರಹ್ಮನೆಂದು ರಾಜನು ಉಪದೇಶಿಸಿದ್ದಾನೆ. ಹೀಗೆ ಜಿಜ್ಞಾಸಾಮಾನತ್ವ ಮುಂತಾದ ಬ್ರಹ್ಮನ ಲಿಂಗಗಳಿಂದ ವೈಶ್ವಾನರನಿಗೆ ವಿಶೇಷಣಗಳನ್ನು ಹೇಳಿದ್ದರಿಂದ ವೈಶ್ವಾನರನು ಬ್ರಹ್ಮನೇ ಆಗುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡಿದ್ದಾರೆ.

**तन्न, जाठरस्य पृथगुक्तययोगस्योक्तत्वात् ।**

ಅದ್ವೈತಿಗಳಂತೆ ಇವರ ವ್ಯಾಖ್ಯಾನವೂ ಇರುತ್ತದೆ. ಎಂದರೆ ಜಾಠರಾಗ್ನಿಯನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಪರಿಗಣಿಸಿದ್ದು ತಪ್ಪಾಗುತ್ತದೆಂಬುದು ಇವರಿಗೂ ಸಮಾನ ಎಂದರ್ಥ.

**''आत्मानं वैश्वानरम्'' इति साक्षाद्वैश्वानरविशेषणाऽत्मश्रुतिग्रहणसम्भवे प्राकरणिकलिङ्गरूपविशेषणग्रहणायोगाच्च ।।**

ಮತ್ತು 'ಆತ್ಮಾನಂ ವೈಶ್ವಾನರಮ್' ಎಂಬುದಾಗಿ ವೈಶ್ವಾನರನಲ್ಲಿ ನೇರವಾಗಿ ವಿಶೇಷಣವಾಗಿರುವ ಆತ್ಮಶ್ರುತಿಯಿಂದಲೇ ಬ್ರಹ್ಮನು ವೈಶ್ವಾನರನಾಗಿದ್ದಾನೆಂದು ಹೇಳಲು ಬರುವಾಗ ಪ್ರಕರಣದಿಂದ ಲಭಿಸುವ ಲಿಂಗವೆಂಬ ವಿಶೇಷಣದಿಂದ ಪರಮಾತ್ಮನನ್ನು ವೈಶ್ವಾನರನೆಂದು ನಿರ್ಣಯಿಸುವುದು ಅಯುಕ್ತವಾಗಿದೆ.

**प्रकाशः –**

अन्ये त्विति । ''आत्मानं वैश्वानरमुपास्ते'' इत्यत्र वैश्वानरः किं जाठराग्निः भूताग्निर्वा दिव्यदेवता वा जीवात्मा वा परमात्मा वेति संशये,

ವಿವರಣೆ - 'ಅನ್ಯೇತ್ವಿತಿ' ಎಂಬ ಗ್ರಂಥದ ಅಭಿಪ್ರಾಯ ಹೀಗೆ - ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣ ಶರೀರ ಹೀಗಿದೆ - 'ಆತ್ಮಾನಂ ವೈಶ್ವಾನರಮುಪಾಸ್ತೇ' ಎಂಬುದು ಈ ಅಧಿಕರಣದ ವಿಷಯವಾಕ್ಯ. ಇಲ್ಲಿ ಕೇಳಿಸುತ್ತಿರುವ ವೈಶ್ವಾನರವು ಜಾಠರಾಗ್ನಿಯೋ? ಭೌತಿಕವಾದ ಅಗ್ನಿಯೋ? ದಿವ್ಯದೇವತೆಯೋ? ಜೀವಾತ್ಮನೋ? ಪರಮಾತ್ಮನೋ? ಎಂದು ಸಂಶಯ.

**प्रकाशः** – 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे'' इति जाठराग्नौ, ''विश्वस्मा अग्निं भुवनाय देवा वैश्वानरम्'' इति बाह्ये भूताग्नौ, ''वैश्वानरस्य

सुमतौ स्याम'' इति देवतायां प्रयोगाद्वैश्वानरशब्दस्य त्रितयसाधारण्या-ज्जाठराग्न्यादिरेव वा, आत्मशब्दस्य जीवे रूढत्वात्तद्बलाज्जीवो वेति प्राप्ते,

'ಅಯಮಗ್ನಿರ್ವೈಶ್ವಾನರಃ ಯೋಽಯಮಂತಃ ಪುರುಷೇ' ಎಂಬ ಶ್ರುತಿಯು ಜಾಠರಾಗ್ನಿಯನ್ನು ವೈಶ್ವಾನರನೆನ್ನುತ್ತಿದೆ. 'ವಿಶ್ವಸ್ಮಾ ಅಗ್ನಿಂ ಭುವನಾಯ ದೇವಾ ವೈಶ್ವಾನರಮ್' ಎಂಬ ಶ್ರುತಿಯು ಭೂತಾಗ್ನಿಯನ್ನು ವೈಶ್ವಾನರನೆನ್ನುತ್ತಿದೆ. 'ವೈಶ್ವಾನರಸ್ಯ ಸುಮತೌ ಸ್ಯಾಮ' ಎಂಬ ಶ್ರುತಿಯು ದೇವತೆಯನ್ನು ವೈಶ್ವಾನರನೆನ್ನುತ್ತಿದೆ. ಹೀಗೆ ವೈಶ್ವಾನರ ಶಬ್ದವು ಮೂವರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾಗಿರುವುದರಿಂದ ಜಾಠರಾಗ್ನಿ, ಭೌತಿಕಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ ಇವರೇ ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯರಾಗುತ್ತಾರೆ. ಅಥವಾ ವೈಶ್ವಾನರ ಪ್ರಕರಣದಲ್ಲಿ ಆತ್ಮಶಬ್ದವು ಕೇಳಿಸುತ್ತಿದೆ. ಈ ಆತ್ಮಶಬ್ದವು ಜೀವನಲ್ಲಿ ರೂಢವಾದ್ದರಿಂದ ಜೀವನೂ ಸಹ ವೈಶ್ವಾನರನಾಗಬಹುದು. ಇಷ್ಟು ಪೂರ್ವಪಕ್ಷ.

**प्रकाशः** – ''एतस्यात्मनो वैश्वानरस्य द्यौर्मूर्धैव'' इत्यादिना द्युमूर्धत्वादिश्रवणात्, ''को न आत्मा किं ब्रह्म'' इति ब्रह्मशब्दश्रवणात्, तयोश्चान्यत्रायोगात्, वैश्वानरशब्दस्य विश्वश्चासौ नरश्चेति विश्वनरः सर्वात्मकः पुरुष इत्यर्थः । विश्वनर एव वैश्वानर इति योगवृत्त्या ब्रह्मणि सम्भवात्, आत्मशब्दस्य जीववद् ब्रह्मण्यपि वृत्तेः वैश्वानरो ब्रह्मेति सिद्धान्त इत्याहुः ।

'ಏತಸ್ಯಾತ್ಮನೋ ವೈಶ್ವಾನರಸ್ಯ ದ್ಯೌರ್ಮೂರ್ಧೈವ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ದ್ಯುಲೋಕವೇ ಯಾರ ತಲೆಯಾಗಿದೆಯೋ, ಅವನೇ ವೈಶ್ವಾನರನೆಂದು ಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ. ಮತ್ತು 'ಕೋ ನ ಆತ್ಮಾ ಕಿಂ ಬ್ರಹ್ಮ' ಎಂಬಲ್ಲಿ ಬ್ರಹ್ಮಶಬ್ದವು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ ಈ ಬ್ರಹ್ಮಶಬ್ದವು ಬೇರೆ ಕಡೆ ಬರಲು ಸಾಧ್ಯವಿಲ್ಲದ ಕಾರಣ ಸರ್ವಾತ್ಮಕನಾದ ಪುರುಷನೇ ವೈಶ್ವಾನರನಾಗಿದ್ದಾನೆ. 'ವೈಶ್ವಾನರ' ಶಬ್ದಕ್ಕೆ 'ವಿಶ್ವಶ್ಚಾಸೌ ನರಶ್ಚ ವಿಶ್ವನರಃ, ವಿಶ್ವನರಃ ಏವ ವೈಶ್ವಾನರಃ' ಎಂಬ ಯೌಗಿಕವಾದ ವ್ಯುತ್ಪತ್ತಿಯನ್ನು ತಿಳಿಯಬೇಕು. ಸಕಲ ಆತ್ಮರ ಸ್ವರೂಪನಾದ್ದರಿಂದ ವಿಶ್ವನರನಾಗಿದ್ದಾನೆ. ಸ್ವಾರ್ಥದಲ್ಲಿ 'ಅಣ್' ಪ್ರತ್ಯಯ ಮಾಡಿದಾಗ ವಿಶ್ವಾನರನೇ ವೈಶ್ವಾನರನೆನಿಸುತ್ತಾನೆ. ಆತ್ಮಶಬ್ದವು ಜೀವನಂತೆ ಬ್ರಹ್ಮನಲ್ಲಿಯೂ ಉಪಪನ್ನನಾಗುವುದರಿಂದ ವೈಶ್ವಾನರನಾದವನು ಬ್ರಹ್ಮನೇ ಆಗುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ.

**प्रकाशः** – तत्र सूत्रार्थनिरासेनैतन्निरस्तमिति भावेन तमनूद्य निराह – अयमिति ।

ಸೂತ್ರಾರ್ಥನಿರಾಸ ಮಾಡುವುದರಿಂದಲೇ ಅದ್ವೈತಿಗಳ ಅಧಿಕರಣಶರೀರವೂ ಸಹ ನಿರಾಕೃತವಾಗುತ್ತದೆಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಗ್ರಂಥಕಾರರು ಸೂತ್ರಾರ್ಥವನ್ನು ಅನುವಾದ ಮಾಡಿ ನಿರಾಕರಿಸುತ್ತಿದ್ದಾರೆ. 'ಅಯಂ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ.

ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

**प्रकाशः – जाठरेति । अन्यथा 'अत एव न देवता भूतं जाठरश्च' इति निर्देशः स्यादिति भावः ।**

ಭೌತಿಕಾಗ್ನಿಯಲ್ಲಿಯೇ ಜಠರಾಗ್ನಿಯೂ ಸಹ ಸೇರುತ್ತದೆ. ಇಲ್ಲದಿದ್ದರೆ ಜಾಠರಾಗ್ನಿಯನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ನಿರಾಕರಿಸಲು 'ಅತ ಏವ ನ ದೇವತಾ ಭೂತಂ ಚ ಜಾಠರಶ್ಚ' ಎಂದು ಸೂತ್ರದಲ್ಲಿ ಹೇಳಬೇಕಿತ್ತು ಎಂದು 'ಜಾಠರ' ಎಂಬ ಪ್ರತೀಕದ ಅರ್ಥ.

**प्रकाशः – जीवकोटेरप्युत्थानमाह – भाष्योक्तेति । "अयमात्मा ब्रह्म"**

**'अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः ।'**

**इत्यादिभिरित्यर्थः ।**

ಜೀವಕೋಟಿಕವಾದ ಪೂರ್ವಪಕ್ಷವೂ ಸಹ ಹುಟ್ಟುವುದಿಲ್ಲವೆಂದು 'ಭಾಷ್ಯೋಕ್ತ' ಎಂಬ ವಾಕ್ಯದಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. 'ಅಯಮಾತ್ಮಾ ಬ್ರಹ್ಮ' 'ಅನಾತ್ತತ್ವದನಾತ್ಮಾನ ಊನತ್ವಾದ್ಗುಣರಾಶಿತಃ ।' ಇವೇ ಮೊದಲಾದ ಶ್ರುತಿಸ್ಮೃತಿಗಳಿಂದ ಆತ್ಮಶಬ್ದವು ಬ್ರಹ್ಮನನ್ನೇ ಪ್ರತಿಪಾದಿಸುತ್ತದೆ ಹೊರತು ಜೀವನಲ್ಲಿ ಬರುವುದಿಲ್ಲವೆಂದು ತಿಳಿಯಬೇಕು.

**प्रकाशः – स्वीकृतत्वमेव व्युत्थितं प्रति विपक्षे बाधकोक्त्याऽऽह – अन्यथेति ॥**

ಆತ್ಮಶಬ್ದವು ಪರಮಾತ್ಮನನ್ನೇ ಪ್ರತಿಪಾದಿಸುತ್ತದೆಂದು ನೀವೂ ಸಹ ಒಪ್ಪಬೇಕು. ಇಲ್ಲದಿದ್ದರೆ ವಿಪಕ್ಷದಲ್ಲಿ ಬಾಧಕಬರುತ್ತದೆಂದು 'ಅನ್ಯಥಾ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ.

**प्रकाशः – केचित्त्विति । वैश्वानरः किं परमात्मेति शक्यनिर्णय उत नेति संशये,**

'ಕೇಚಿತ್' ಎಂದರೆ ರಾಮಾನುಜರು. ಅವರ ಅಧಿಕರಣ ಶರೀರ ಹೀಗಿದೆ - ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು ಪರಮಾತ್ಮನೆಂದು ನಿಶ್ಚಯ ಮಾಡಲು ಸಾಧ್ಯವಿದೆಯೋ? ಇಲ್ಲವೊ? ಎಂದು ಸಂಶಯ.

**प्रकाशः – जीवपरसाधारणाऽत्मशब्दसत्त्वेऽप्यात्मशब्दस्य "वैश्वानरमात्मानम्" इति जीवे अप्रसिद्धवैश्वानरशब्दविशेषितत्वेन जीवविषयत्वशङ्कानुदयात्,**

ವಾಸ್ತವಿಕವಾಗಿ ವೈಶ್ವಾನರ ಪ್ರಕರಣದಲ್ಲಿ ಆತ್ಮಶಬ್ದವು ಕೇಳಿಸುತ್ತಿದೆ. ಈ ಆತ್ಮಶಬ್ದವು ಜೀವನಲ್ಲಿ ಹಾಗೂ ಪರಮಾತ್ಮನಲ್ಲಿ ಸಾಧಾರಣವಾಗಿದೆ. ಆದರೂ ಜೀವನನ್ನು ಆತ್ಮನೆಂದು ಸ್ವೀಕರಿಸಲು ಸಾಧ್ಯವಿಲ್ಲ.

'ವೈಶ್ವಾನರಮಾತ್ಮಾನಮ್' ಎಂಬುದಾಗಿ ಜೀವನಲ್ಲಿ ಅಪ್ರಸಿದ್ಧವಾದ ವೈಶ್ವಾನರಶಬ್ದವನ್ನು ವಿಶೇಷಣವನ್ನಾಗಿ ಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ. ಈ ಕಾರಣದಿಂದ ಜೀವವಿಷಯಕವಾದ ಶಂಕೆಯು ಹುಟ್ಟಲು ಸಾಧ್ಯವೇ ಇಲ್ಲ.

**प्रकाशः** – जाठरभूतदेवतासु प्रागुक्तरीत्या प्रयोगदर्शनात्, परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" इति प्रयोगदर्शनात्, वैश्वानरशब्दस्य जाठरादिचतुष्टयसाधारण्यात्;

ಇನ್ನು ಜಾಠರಾಗ್ನಿಯಲ್ಲಿ, ಭೂತಾಗ್ನಿಯಲ್ಲಿ ಮತ್ತು ಅಗ್ನಿದೇವತೆಯಲ್ಲಿ ಹಿಂದೆ ಹೇಳಿದಂತೆ ಪ್ರಯೋಗವು ಕಾಣಿಸುತ್ತಿದೆ. ಪರಮಾತ್ಮನಲ್ಲಿಯೂ 'ತದಾತ್ಮನ್ಯೇವ ಹೃದಯೇऽಗ್ನೌ ವೈಶ್ವಾನರೇ ಪ್ರಾಸ್ಯತ್' ಎಂದು ವೈಶ್ವಾನರ ಶಬ್ದ ಪ್ರಯೋಗವು ಕಾಣಿಸುತ್ತಿದೆ. ಹೀಗೆ ವೈಶ್ವಾನರ ಶಬ್ದವು ನಾಲ್ಕು ಪದಾರ್ಥಗಳಲ್ಲಿ ಸಾಧಾರಣವಾಗಿದೆ.

**प्रकाशः** – उपक्रमगतब्रह्मात्मशब्दयोर्मिथः प्रतिबद्धत्वेनानिर्धारकत्वात्, अन्नादनरूपफलस्य च सर्वत्रोपपन्नत्वादशक्यनिर्णय इति प्राप्ते,

ಹಾಗೂ ಉಪಕ್ರಮದಲ್ಲಿ ಬ್ರಹ್ಮಶಬ್ದ ಹಾಗೂ ಆತ್ಮಶಬ್ದಗಳು ಕೇಳಿಸುತ್ತಿವೆ. ಬ್ರಹ್ಮಶಬ್ದವು ವೈಶ್ವಾನರನನ್ನು ನಿರ್ಧಾರ ಮಾಡಲು ಹೊರಟರೆ ಜೀವನಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ ಆತ್ಮಶಬ್ದವು ಪ್ರತಿಬಂಧಕವಾಗುತ್ತದೆ. ಆತ್ಮಶಬ್ದವು ವೈಶ್ವಾನರನನ್ನು ನಿರ್ಧಾರ ಮಾಡಲು ಹೊರಟರೆ, ಪರಮಾತ್ಮನಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದ ಬ್ರಹ್ಮಶಬ್ದವು ಪ್ರತಿಬಂಧಕವಾಗುತ್ತದೆ. ಹೀಗೆ ಎರಡೂ ಶಬ್ದಗಳು ಪರಸ್ಪರ ಪ್ರತಿಬಧ್ಯ ಪ್ರತಿಬಂಧಕಗಳಾಗಿ ಜೀವನನ್ನು ಅಥವಾ ಬ್ರಹ್ಮನನ್ನು ವೈಶ್ವಾನರನೆಂದು ನಿರ್ಣಯ ಮಾಡಲು ಬಿಡುವುದಿಲ್ಲ. ಇದರಂತೆ ಶ್ರುತಿಯಲ್ಲಿ 'ಅನ್ನಾದನ' ಎಂಬ ಫಲವು ಕೇಳಿಸುತ್ತಿದೆ. ನಾವು ತಿನ್ನುವ ಅನ್ನವನ್ನು ಜೀರ್ಣಮಾಡುವಿಕೆಯು, ತಿನ್ನುವಿಕೆಯು, ವಿಷ್ಣುವಿನಲ್ಲಿಯೇ ಉಪಪನ್ನವಾಗಬೇಕಾಗಿಲ್ಲ. ಜಾಠರಾಗ್ನಿಯಲ್ಲಿ ಅಥವಾ ಅಗ್ನಿದೇವತೆಯಲ್ಲಿ ಎಲ್ಲೆಡೆಯೂ ಇದು ಉಪಪನ್ನವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ವೈಶ್ವಾನರನು ಪರಮಾತ್ಮನೇ ಆಗಿದ್ದಾನೆಂದು ನಿರ್ಧಾರ ಮಾಡಲು ಸಾಧ್ಯವಿಲ್ಲವೆಂದು ಪೂರ್ವಪಕ್ಷ.

**प्रकाशः** – "को न आत्मा किं ब्रह्म" इति सर्वेषां जीवानाम् आत्मभूतं ब्रह्म किमिति प्रश्नकरणात्, उत्तरे च "आत्मानं वैश्वानम्" इति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्चायं वैश्वानरः परमात्मेति निर्णेतुं शक्यत एव,

'ಕೋ ನ ಆತ್ಮಾ ಕಿಂ ಬ್ರಹ್ಮ' ಎಂಬುದಾಗಿ ಪ್ರಾರಂಭದಲ್ಲಿ ಸಕಲ ಜೀವರುಗಳಿಗೆ ಆತ್ಮನಾಗಿರುವ ಬ್ರಹ್ಮನು ಯಾರು? ಎಂಬುದಾಗಿ ಪ್ರಶ್ನಿಸಲಾಗಿದೆ. ಇದಕ್ಕೆ ಉತ್ತರ ನೀಡುವಾಗ 'ಆತ್ಮಾನಂ ವೈಶ್ವಾನರಮ್' ಎಂದು ಬ್ರಹ್ಮಶಬ್ದದ ಸ್ಥಾನದಲ್ಲಿ ವೈಶ್ವಾನರಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸಲಾಗಿದೆ. ಬ್ರಹ್ಮನ ಬಗ್ಗೆ ಪ್ರಶ್ನಿಸಿದಾಗ ಆತ್ಮನೇ ವೈಶ್ವಾನರನೆಂದು ಉತ್ತರಿಸಿದ್ದರಿಂದ ವೈಶ್ವಾನರನು ಪರಮಾತ್ಮನೇ ಆಗಿದ್ದಾನೆಂದು ನಿರ್ಣಯಿಸಬಹುದು.

ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

**प्रकाशः** – चतुष्टयसाधाणस्यापि वैश्वानरशब्दस्यास्मिन् प्रकरणे मुमुक्षुभिरौपमन्यवादिभिर्जिज्ञास्यत्वसर्वात्मत्वादिभिर्ब्रह्मधर्मैर्विशेष्यमाणत्वादित यर्थ इत्याहुरित्यर्थः ।

ವಸ್ತುತಃ ವೈಶ್ವಾನರ ಶಬ್ದವು ನಾಲ್ವರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾಗಿದೆ. ಆದರೂ ಈ ಪ್ರಕರಣದಲ್ಲಿ ಮುಮುಕ್ಷುಗಳಾದ ಔಪಮನ್ಯು ಮೊದಲಾದವರಿಂದ ವೈಶ್ವಾನರನು ಜಿಜ್ಞಾಸ್ಯನಾಗಿದ್ದಾನೆಂದು ತಿಳಿಯುತ್ತಿದೆ. ಇದರಿಂದ ಮತ್ತು ಸರ್ವಾತ್ಮಕತ್ವವೇ ಮೊದಲಾದ ಬ್ರಹ್ಮನ ಲಿಂಗಗಳು ಇವನಿಗೆ ವಿಶೇಷಣ ಎಂದು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ ವೈಶ್ವಾನರನು ಬ್ರಹ್ಮನೇ ಆಗಿದ್ದಾನೆಂದು ನಿರ್ಣಯವಾಗುತ್ತದೆ. ಇಷ್ಟು ರಾಮಾನುಜರು ಮಾಡಿರುವ ಸಿದ್ಧಾಂತ.

**प्रकाशः** – **आत्मश्रुतीति** । तस्या ब्रह्मसाधारण्योपपादनस्य त्वन्मतेऽपि तुल्यत्वादिति भावः ।।

ಆತ್ಮಶ್ರುತಿಯು ಬ್ರಹ್ಮನಲ್ಲಿ ಮಾತ್ರ ಉಪಪನ್ನವಾಗುತ್ತದೆಂದು ಅದ್ವೈತಿಗಳಂತೆ ವಿಶಿಷ್ಟಾದ್ವೈತಿಗಳೂ ಸಹ ಒಪ್ಪಬೇಕು ಎಂದು ಆತ್ಮಶ್ರುತಿ ಎಂಬ ಪ್ರತೀಕದ ಅಭಿಪ್ರಾಯ.

**गुरुराजीयम्** – **जाठराग्नेरपि भूतजातित्वेनेति** ।। भूतताविशेषाद्भौमदिव्यादिवत् जाठरस्याप्युपादानं कार्यम् । जाठरत्वरूपावान्तरोपाधिविवक्षया तस्य पृथगुपादाने भौमादीनामपि भौमत्वादिधर्मोपाधिना पृथग्ग्रहणापत्त्याऽर्ध-जरतीयानुपपत्तेरिति भावः ।। **उक्तत्वादिति** ।। जाठराग्नेरपि भूतजातित्वेन पृथगुक्त्य योगादित्यनेनोक्तत्वादित्यर्थः ।




ಶಾಂಕರ ಭಾಷ್ಯದಲ್ಲಿ ಸೂತ್ರಾರ್ಥವನ್ನು ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ - ಛಾಂದೋಗ್ಯದಲ್ಲಿ 'ಅಯಮಗ್ನಿರ್ವೈಶ್ವಾನರಃ' ಎಂಬುದಾಗಿ ವೈಶ್ವಾನರ ಶಬ್ದವು ಕೇಳಿಸುತ್ತಿದೆ. ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ ಮೂವರಲ್ಲಿಯೂ ವೈಶ್ವಾನರ ಶಬ್ದವು ಸಮಾನವಾಗಿ ಪ್ರಯೋಗಿಸಲ್ಪಡುತ್ತದೆ. ಪ್ರಕರಣದ ಪ್ರಾರಂಭದಲ್ಲಿ ಜೀವ ಹಾಗೂ ಈಶ್ವರರಲ್ಲಿ ಸಾಧಾರಣವಾದ ಆತ್ಮಶಬ್ದವು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ ಜೀವನೂ ಸಹ ವೈಶ್ವಾನರನೆನಿಸಬಹುದು. ಇಷ್ಟು ಪೂರ್ವಪಕ್ಷ.

ವೈಶ್ವಾನರ ಹಾಗೂ ಆತ್ಮಶಬ್ದಗಳು ಸಾಧಾರಣವಾಗಿದ್ದರೂ 'ಮೂರ್ಧೈವ ಸುತೇಜಾಃ' ಇತ್ಯಾದಿಯಾಗಿ ಸ್ವರ್ಗಾದಿಲೋಕಗಳೇ ವೈಶ್ವಾನರನ ಅವಯವವಾಗಿದೆಯೆಂದು ಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ. ಹೀಗೆ ಜೀವನಲ್ಲಿಲ್ಲದ ವಿಶೇಷಣಗಳನ್ನು ವೈಶ್ವಾನರನಲ್ಲಿ ಹೇಳಿದ್ದರಿಂದ ಬ್ರಹ್ಮನೇ ಇಲ್ಲಿ ವೈಶ್ವಾನರ ಶಬ್ದದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ.

ಶಂಕರ ಭಾಷ್ಯದ ಈ ವ್ಯಾಖ್ಯಾನವು ಅಯುಕ್ತವಾಗಿದೆ. ಏಕೆಂದರೆ ವೈಶ್ವಾನರಶಬ್ದವು ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ ಮೂರರಲ್ಲಿ ಮಾತ್ರ ಸಾಧಾರಣವಾಗಿಲ್ಲ. ಆತ್ಮನಲ್ಲಿಯೂ ಸಹ ಸಾಧಾರಣವಾಗಿರುವುದರಿಂದ ತ್ರಿತಯ ಸಾಧಾರಣವೆಂಬ ಅದ್ವೈತಿಗಳ ಮಾತು ತಪ್ಪಾಗುತ್ತದೆ.

ಮತ್ತು ಆತ್ಮಶಬ್ದವು ಜೀವ ಹಾಗೂ ಈಶ್ವರರಲ್ಲಿ ಸಾಧಾರಣವಾಗಿದೆಯೆಂದು ಸಾಧಾರಣಶಬ್ದದ ಅರ್ಥವನ್ನು ಹೇಳಿದರೆ; 'ದ್ಯುಭ್ವಾದ್ಯಾಯತನಂ ಸ್ವ ಶಬ್ದಾತ್' ಎಂಬಲ್ಲಿ 'ಸ್ವಶಬ್ದಾತ್' ಎಂಬ ಶಬ್ದಕ್ಕೆ 'ಆತ್ಮಶಬ್ದಾತ್' ಎಂದು ವ್ಯಾಖ್ಯಾನಿಸಿ ದ್ಯುಭ್ವಾದ್ಯಾಯತನತ್ವವನ್ನು ಬ್ರಹ್ಮನಲ್ಲಿ ಸಮರ್ಥಿಸಿದ್ದಾರೆ. ಇದರಿಂದ ಆತ್ಮಶಬ್ದವು ಕೇವಲ ಬ್ರಹ್ಮನನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತದೆಂದು ಅವರು ಒಪ್ಪಿದ್ದಾರೆ. ಇಲ್ಲದಿದ್ದರೆ 'ನಾನುಮಾನಮತಚ್ಛಬ್ದಾತ್' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಆತ್ಮಶಬ್ದ ಜೀವನಲ್ಲಿಲ್ಲದ ಕಾರಣ ಜೀವನು ದ್ಯುಭ್ವಾದ್ಯಾಯತನನಾಗುವುದಿಲ್ಲವೆಂದು ನಿರಾಕರಿಸಿದ್ದು ಅವರ ಪ್ರಕಾರವೇ ತಪ್ಪಾಗುತ್ತದೆ.

ರಾಮಾನುಜ ಭಾಷ್ಯದಲ್ಲಿ ಪ್ರಥಮ ಸೂತ್ರವ್ಯಾಖ್ಯಾನ ಹೀಗಿದೆ -

ಜಾಠರಾಗ್ನಿ, ಭೂತಾಗ್ನಿ, ಅಗ್ನಿದೇವತೆ, ಪರಬ್ರಹ್ಮ ಈ ನಾಲ್ಕರಲ್ಲಿಯೂ ಸಾಧಾರಣವಾದ ವೈಶ್ವಾನರಶಬ್ದಕ್ಕೆ ಪರಮಾತ್ಮನಲ್ಲಿ ಮಾತ್ರ ಇರುವ ಧರ್ಮಗಳನ್ನು ವಿಶೇಷಣವನ್ನಾಗಿ ಹೇಳಲಾಗಿದೆ. ಮುಮುಕ್ಷುಗಳಾದ ಔಪಮನ್ಯುವೇ ಮೊದಲಾದ ಐದು ಮಂದಿ ಶಿಷ್ಯಂದಿರು ಬ್ರಹ್ಮನ ಜಿಜ್ಞಾಸೆಯನ್ನು ಮಾಡಿದ್ದಾರೆ. ಆವಾಗ ವೈಶ್ವಾನರನೇ ಬ್ರಹ್ಮನೆಂದು ರಾಜನು ಉಪದೇಶಿಸಿದ್ದಾನೆ. ಹೀಗೆ ಜಿಜ್ಞಾಸ್ಯಮಾನತ್ವ ಮುಂತಾದ ಬ್ರಹ್ಮನ ಲಿಂಗಗಳಿಂದ ವೈಶ್ವಾನರನಿಗೆ ವಿಶೇಷಣಗಳನ್ನು ಹೇಳಿದ್ದರಿಂದ ವೈಶ್ವಾನರನು ಬ್ರಹ್ಮನೇ ಆಗುತ್ತಾನೆಂದು ಸಿದ್ಧಾಂತ ಮಾಡಿದ್ದಾರೆ.

ಅದ್ವೈತಿಗಳಂತೆ ಇವರ ವ್ಯಾಖ್ಯಾನವೂ ಇರುತ್ತದೆ. ಜಾಠರಾಗ್ನಿಯನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಪರಿಗಣಿಸಿದ್ದು ತಪ್ಪಾಗುತ್ತದೆಂಬುದು ಇವರಿಗೂ ಸಮಾನ.

ಮತ್ತು 'ಆತ್ಮಾನಂ ವೈಶ್ವಾನರಮ್' ಎಂಬುದಾಗಿ ವೈಶ್ವಾನರನಲ್ಲಿ ನೇರವಾಗಿ ವಿಶೇಷಣವಾಗಿರುವ ಆತ್ಮಶ್ರುತಿಯಿಂದಲೇ ಬ್ರಹ್ಮನು ವೈಶ್ವಾನರನಾಗಿದ್ದಾನೆಂದು ಹೇಳಲು ಬರುವಾಗ ಪ್ರಕರಣದಿಂದ ಲಭಿಸುವ ಲಿಂಗವೆಂಬ ವಿಶೇಷಣದಿಂದ ಪರಮಾತ್ಮನನ್ನು ವೈಶ್ವಾನರನೆಂದು ನಿರ್ಣಯಿಸುವುದು ಅಯುಕ್ತವಾಗಿದೆ.




## ಶಾಂಕರ ರಾಮಾನುಜ ಭಾಷ್ಯಗಳಲ್ಲಿನ ದ್ವಿತೀಯ ಸೂತ್ರಾರ್ಥ ವಿಮರ್ಶೆ

### तात्पर्यचन्द्रिका

**यच्चयोक्तमन्यैः–**

'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं........................ ।।'

ವೈಶ್ವಾನರಾಧಿಕರಣ (೧-೨-೭)

